गुरो ! इयं भिक्षाऽद्य मया लब्धेति निवेद्य, अथाहःशेषं वाग्यतस्तिष्ठेदासीनो वा ॥ ततो गुरुर्ब्रह्मचारिणे ब्रह्मचर्य-नियमान् श्रावयति—

'भूमौ शयनम्, क्षारलवणादि-निवृत्तिः ॥ दण्डधारणम् । अग्निपरिचरणम् । (अरण्यात् स्वयं शीर्णाः समिध आनीय सायं प्रातः, सन्ध्योपासनपूर्वकं परिसमूहनादि त्र्यायुष-करणान्तं यथोक्तकर्म प्रतिदिनं कुर्यात्) गुरुशुश्रूषाभिक्षाचर्या सायं प्रातर्भोजनार्थं भोजनसान्निध्ये वारद्वयं वाऽनिन्द्य कर्मनिष्ठवेदाध्यायिब्राह्मणगृहे गुर्वाज्ञया भैक्ष्यं याचित्वा, भोजनविधिना भुञ्जीत । मधु-क्षौद्रं मांसञ्च कदापि नाश्नीयात्। नद्यादि-जलाशये प्रविश्य स्नानं नाचरेत्, किन्तूद्-धृतोदकेन स्नायात् । खट्वादावुपर्यासनं

अपरिमिता वा मातरं प्रथमाम् ॥ इति विधिः ॥ कार्या भिक्षा सदाधार्यं, कौपीनं कटिसूत्रकम् । कौपीनमहतंधार्यं,दण्डं वा वस्त्रपार्श्वयुक् ॥१॥ यज्ञोपवीतमजिनम् मौञ्जीदंण्डञ्च धारयेत् ॥ नष्टे भ्रष्टे नवं मन्त्रात् धृत्वा भ्रष्टं जले क्षिपेत् ॥२॥ एवं स्नातकस्य कीर्तिर्भवति-त्रयः स्नातकाः-विद्यास्नातकः- व्रतस्नातकः विद्याव्रतस्नातकः-इति ।

वर्जयेत्। स्त्रीगमनं नग्न—स्त्री निरीक्षणं
स्त्रीणांमध्येऽवस्थानं च वर्जयेत् ।। वृक्षारो
हणम्, विषमभूमिलंघनम् लघुशंकाशौच
काले दक्षिणकर्णे यज्ञोपवीतधारणम् ॥

इत्युपनयनकालादारभ्य—समावर्तनावधि, ब्रह्मचारि
कृत्यं धर्मशास्त्रतो निर्दर्शितम् ।। तदेव श्लोकैरुपदिशेत्--

'न खादनीयो मधुरोऽप्यखाद्यो, न वर्ज
नीयोऽपि स्ववीर्य्यविन्दुः । चित्ते परस्त्रीवि
मुखप्रवृत्तिर्यथा भवेत्साऽपि तथा यथा यत
स्व ॥१॥ शारीरिकं मानसिकञ्च वीर्यं
मत्यर्थमिष्टं फलसाधनाय ।। इत्यादरादे
स वेदवेदं, तं ब्रह्मचर्य्याह्वयमाह योग
॥२॥ संसर्गजातेन कुचेष्टितेन, जायेत संक्रा
न्तमलोमणिश्च। हेयः कुसङ्गोत इतीह यत्ना
दुदारसंस्काररसाऽऽश्रयेण ॥३॥ धर्मच्यु
तानां निजकुप्रथानां, प्रचारमालोच्य न,सत
रुत्वम्। वेदोपवेदोद्धरसुस्वभावो, विशिष्ट
शिष्यो भव मे निदेशः ॥४॥ यया भवेच्छा

श्वतधर्मवृद्धिस्तथा समृद्धिः खलु सैव शिक्षा।
वर्णस्व भावान्परिणामयन्ती, नान्या मता
भारतवैभवाय ॥५॥

इति विज्ञ आचार्यः श्लोकार्थान्नृभाषया माणवकं श्रावयेत् ॥ तत आगतब्राह्मणा अपि, 'ब्रह्मवर्चस्वी भवे'-त्याशीर्वदेयुः ॥ तत-आचार्यादीन् गन्धादिभिः सम्पूज्य, तेभ्यो दक्षिणाञ्च, दत्त्वा ब्राह्मणभोजन-सङ्कल्पः- भूयसी दक्षिणा-सङ्कल्पश्च कार्यः । तैः प्रदत्ता आशिषो गृहीत्वा, यथासुखं विरमेत् ॥

## ❀ अथ वेदारम्भविधिः ❀

पारम्पर्याऽगतो येषां, वेदः सपरिबृंहणः ।
यच्छाखाकर्म कुर्वीत, तच्छाखाऽध्ययनं तथा
॥ १ ॥ अधीत्यशाखामात्मीयामन्यशाखां
ततः परम् । स्वशाखां यः परित्यज्य(अन्पामधीते) शाखारण्डः स उच्यते ।२॥ उपनीय गुरुः शिष्यं, महाव्याहृति पूर्वकम् वेदमध्यापयेदेनं, शौचाऽऽचारांश्च शिक्षयेत्

यदि आचार्य एक ही दिन में-[१] यज्ञोपवीत (जनेऊ धारण), [२] वेदारम्भ (चारों वेदों का प्रारम्भ) [३] समा-

वर्तन (गृहस्थाश्रम–प्रवेशः) इन तीनों वेदियों का कृत्य करा चाहें, तो नवग्रहादि पूजन पृथक न होगा। अन्यथा पृथक पूजन करना होगा। तथा तीनों हवन वेदियों पर कुशक ण्डिका तो पृथक २ होगी। यज्ञोपवीत संस्कार के अनन्त वेदारम्भ कर्म्म किया जाता है ॥ तद्यथा ॥

तत्राचार्यो वेदाऽऽरम्भवेदीसमीपमागत्योपविश्याऽऽचम्य प्राणानायम्य, गणपत्यादिकं नमस्कृत्य, पञ्चभूसंस्कारपूर्वकमग्निस्थापनं विधाय, तत्राऽर्घं पात्रं संस्थाप्य, ब्रह्मोपवेशनादि-पर्युक्षणान्तं, कर्मकृत्वा, सङ्कल्पं कुर्यात् ॥

ॐ अद्येहेत्यादि अमुकराशेरस्य बटोः श्रौतस्मार्त्त कर्म्माधिकार सम्पादकब्रह्मगायत्रीमन्त्रदृढीकरणार्थं, यजुर्वेदादिक्रमेण वेदारम्भं करिष्ये ॥ इति सङ्कल्प्य ॥ प्रतिज्ञाय ब्रह्माणं सम्पूज्य वृणुयात् ॥ ॐ अद्येहेत्यादि कर्तव्यवेदारम्भाङ्गीभूतहवनकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुमनेन वरणद्रव्येणाऽमुकदैवतेनाऽमुकशर्माणं ब्राह्मणं ब्रह्मत्वेन त्वामहं वृणे। ततः । स्रुवेण मध्ये दीर्घाकाराहुतीरित्यन्तं विधाय, देवताभिध्यानं

करोति ॥ ॐ अद्येह—अस्य बटोः वेदाऽऽर-म्भकर्मणाऽहं यक्ष्ये ॥ तत्र—प्रजापतिमिन्द्र-मग्निम्, सोममन्तरिक्षम्, वायुम्, ब्रह्मा-णम्, छन्दांसि, पृथिवीमग्निम्। ब्रह्माणम्, छन्दांसि। दिवम्, सूर्य्यम्, ब्रह्माणम् छन्दां-सि, दिशश्चन्द्रमसम्। ब्रह्माणम् छन्दांसि। प्रजापतिम् देवान्, ऋषीन्, श्रद्धाम्, मेधाम्, सदसस्पतिमनुमतिमग्निम् वायुम्, सूर्य्यम्, अग्नीवरुणावग्निवरुणावग्निम्, वरुणम्, स-वितारम्, विष्णुम् विश्वान्, देवान् मरुतः, स्वर्क्कान्, वरुणमदितिम्, प्रजापतिम्, स्वि-ष्टकृतञ्चाज्येनाऽहं यक्ष्ये ॥ इदमाज्यं तत्त-द्देवताभ्यो मया परित्यक्तं, यथादैवतमस्तु॥ (मनसा) प्रजापतिन्ध्यात्वा, आघारावा—ज्यभागौ हुत्वा, ॐ एतन्ते इत्यादि ॥ ॐ भूर्भुवः स्वः, हरिनामाऽग्ने सुप्रतिष्ठितो भव ॥ अथाऽग्नेः पूजनम्। ॐ अद्य हेत्यादि-अमुकोऽहं अमुकराशेरस्य बटोः वेदाऽऽरम्भ-

होमकर्मणि हरिनामाग्नेः पूजनं करिष्ये।

ॐ तादेवाग्निरितिमन्त्रेण–ध्यानाऽऽवाहनासनपाद्यादि-
नीराजनान्तं, सम्पूज्य ॥ दक्षिणं जान्वाच्य, ब्रह्मणाऽन्वा-
ब्धो [मनसा] प्रजापतिं ध्यात्वा जुहुयात् ॥

ॐ प्रजापतये–स्वाहा, इदं प्रजापतये ॥
ॐ इन्द्राय स्वाहा, इदमिन्द्राय ॥ ॐ अग्नये
स्वाहा,इदमग्नये ॥ ॐ सोमाय–स्वाहा
इदं सोमाय ॥ अथ यजुर्वेदाहुतयः ॥ ॐ
अन्तरिक्षाय-स्वाहा, इदमन्तरिक्षाय ॥ ॐ
वायवे–स्वाहा, इदं–वायवे ॥ ॐ ब्रह्मणे-
स्वाहा, इदं ब्रह्मणे ॥ ॐ छन्दोभ्यः स्वाहा
इदं छन्दोभ्यः ॥ अथ ऋग्वेदाहुतयः॥ ॐ
पृथिव्यै स्वाहा, इदं पृथिव्यै न मम ॥ ॐ
अग्नये स्वाहा, इदमग्नये ॥ ॐ ब्रह्मणे स्वा-
हा, इदं ब्रह्मणे ॥ ॐ छन्दोभ्यः स्वाहा, इदं
छन्दोभ्यो न मम ॥ अथ सामवेदाऽहुतयः
ॐ दिवः स्वाहा, इदं दिवे न मम ॥ ॐ
सूर्याय स्वाहा, इदं सूर्याय न मम ॥ ॐ ब्र

णे स्वाहा, इदं ब्रह्मणे न मम ।। ओ३म् छन्दोभ्यः स्वाहा, इदं छन्दोभ्यो न मम ।। अथाऽथर्ववेदाऽऽहुतयः ।। ओ३म् दिग्भ्यः स्वाहा, इदं दिग्भ्यो न मम ।। ओ३म् चन्द्रमसे स्वाहा, इदं चन्द्रमसे न मम ।।ओ३म् ब्रह्मणे स्वाहा, इदं ब्रह्मणे न मम ।।ओ३म् छन्दोभ्यः स्वाहाः, इदं छन्दोभ्यो न मम ।। ओ३म् प्रजापतये—स्वाहा, इदं—प्रजापतये ।। ओ३म् देवेभ्यः-स्वाहा, इदं-देवेभ्यः ।। ओ३म् ऋषिभ्यः—स्वाहा, इदं —ऋषिभ्यः ।। ओ३म् श्रद्धायै—स्वाहा, इदं —श्रद्धायै ।। ओ३म् मेधायै—स्वाहा, इदं -मेधायै ।। ओ३म् सदसस्पतये—स्वाहा,इदं-सदसस्पतये ।। ओ३म् अनुमतये—स्वाहा, इदमनुमतये ।। ततो भूरादिनवाहुतिहोमं स्विष्टकृतञ्च हुत्वा दिक्पालेभ्यो बलिं दत्वा उत्थाय घृतपूर्णेन स्रुवेण पूर्णाहुतिं दद्यात् ।। ओ३म् मूर्द्धानन्दिवो ऽअरतिम्पृथिव्व्या व्वैश्श्वानरमृतऽआजातमग्निम् कवि ᳪ सम्राजमतिथिञ्जनानामासन्ना पात्र-

ञ्जनयन्त देवाः स्वाहा ॥

तत्पश्चाद्वसोर्द्धारा होमः ॥ संस्रवप्राशनम् ॥ ततस्त्रि राचामेत् ॥ पवित्राभ्यां मार्जनम् ॥ पवित्रप्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदान सङ्कल्पः ॥

ॐ अद्येहाऽमुकोऽहं अमुकराशेरस्य पुत्र स्यवेदारम्भाङ्गहोमकर्मणः साङ्गफलप्राप्त्यर्थं अपूर्णपूरणार्थम्, इदं पूर्णपात्रं ससुवर्णं ब्रह्मन्! तुभ्यं सम्प्रददे ॥ इति दद्यात् ॥ ब्रह्मा च-ॐ अक्रन् कर्मेति मन्त्राशिषं दद्यात् ॥ ततो ब्रह्म ग्रन्थिविमोकः अग्नेः पश्चात् प्रणीताविमोकः॥ ॐ आपः शिवाः शिवतमा शान्ताः शान्ततमास्तांस्ते कृण्वन्तु भेषजम् ।

इत्युपयमनकुशैर्मार्जनम् ॥ ततः परिस्तरणक्रमेण बर्हि रुत्थाप्य घृतेनाभिघार्य हस्तेनैव ॥

ॐ देवा गातु० इति मन्त्रेण जुहूयात् ॥ ततः काशीगमनम् ॥ अथ वेदारम्भकर्म ॥ यथा ॥ अद्येहामुकोहम् अमुकशर्मणो वेदा

रम्भकर्म्मणः पूर्वाङ्गत्वेन गणपत्यादि-देवानां स्थापनावाहनपूजनानि च करिष्ये ॥ ताम्र-स्थाल्यादौ दध्यक्षतान् गृहीत्वा उत्तरवृद्ध-चास्थापयेत् ॥ ॐ भूर्भुवः स्वः गणेश ! इहागच्छेह तिष्ठ,पूजार्थं त्वामावाहयामि ॥ ॐ भूर्भुवः स्वः, विष्णो ! इहागच्छ० ॥ ॐ भूर्भुवः स्वः, सरस्वति ! इहा० ॥ ॐ भूर्भुवः स्वः, लक्ष्मि ! इहा० । ॐ भूर्भुवः स्वः स्वविद्यासूत्रकारकात्यायन ! इहा० । ॐ एत-न्त'-इति-प्रतिष्ठाप्य, नाममन्त्रेण ध्यानादि-नीराजनान्तं-सम्पूज्य,प्रणम्य, वेदारम्भकारं गुरुं वृणुयात् । वरणद्रव्यं पाद्यादिभिःसम्पूज्य ब्राह्मणञ्च सम्पूजयेत् । ॐअद्येत्यादि । मम ब्र-ह्मगायत्रीमन्त्रदृढीकरणार्थं पञ्चयज्ञतत्त्व ज्ञानकामनया शरीरशुद्धिद्वारा-ऐहिकामुष्मि-कफलसम्पादक वेदारम्भकर्मणि,एतेनवासाङ्गु-लीयकासनमूल्योपकल्पितेनाऽमुकद्रव्येणाऽमु-कदैवतेनाऽमुकगोत्रममुकशर्माणं ब्राह्मणं

वेदारम्भगुरुत्वेन त्वामहं वृणे ॥ इति-वृ
त्वा ॥ "वृतोस्मीति"-गुरुः ॥ ततः पूर्वाभि
मुखोपविष्टाय माणवकाय गुरुर्वेदारम्भं कार-
येत् ॥ ब्रह्मचारी पवित्रपाणिनाचम्य, प्राणा
यामं विधाय ॥ ॐ अज्ञानतिमिरान्धस्य
ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन
तस्मै श्रीगुरवे नमः ॥ इति गुरुं प्रणम्य, वेदा
रम्भं गुरुद्वारा सप्रणवं कारयेत् ॥ ॐ इषे
त्वादि-खम्ब्रह्मान्तस्य, माध्यन्दिनीयकस्य
वाजसनेयकस्य, यजुर्वेदाम्नायस्य
विवस्वान् ऋषिर्गायत्र्यादीनि सर्वाणिच्छ
न्दांसि, सर्वाणि यजूंषिसामानि प्रतिलि
ङ्गोक्ता-देवता, यजुर्वेदारम्भे विनि
योगः ॥ ॐ हरिः ॐ ॥ ॐ भूर्भुवः स्वः
गायत्रीमन्त्रपठन पूर्वकं वेदारम्भं कुर्यात् ॥
ॐ इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः
सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणऽआ
प्यायध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरन

मोवा ऽ अयक्ष्मा माबस्तेनऽईशतमाघश ᳪ सोद्ध्रुवा ऽ अस्मिन् गोपतौ स्यात बह्वीर्य जमानस्य पशून् पाहि ॥ इति पठित्वा ॥ ॐ अद्येत्यादि० अमुकोऽहं, कृतस्य यजुर्वेदारम्भकर्म्मणः साङ्गफलावाप्तये, इदं द्रव्यममुकदैवतममुकगोत्रायाऽमुकशर्म्मणे ब्राह्मणाय गुरवे तुभ्यमहं सम्प्रददे ॥ एवं सर्वत्रोह्यम् ॥१॥ ततः ऋग्वेदादिमन्त्रस्य मधुच्छन्दा-ऋषिर्गायत्रीछन्दोऽग्निर्देवता, स्वाध्याये-विनियोगः ॥ ॐ अग्निमीले पुरोहितँ य्यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् ॥ इति ऋग्वेदः ॥२॥ अथ सामवेदादिमन्त्रस्य गौतमऋषिर्गायत्रीछन्दोऽग्निर्देवता, स्वाध्याये विनियोगः ॥

२ ३ १ २ ३ १२ ३ २ ३१
ॐ अग्न आयाहि वीतये गृणानो हव्यदातये।
१ २ ३ १ २
निहोता सत्सि बर्हिषि ॥ इति सामवेदः ॥३॥ शं नो देवीरिति दध्यङ्ङाथर्व्वण-

ऋषिर्गायत्री—छन्दोऽग्निर्द्दैवता, स्वाध्याये विनियोगः ॥ ओ३म् शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये । शँय्योरभिस्रवन्तु नः । इत्यथर्व्ववेदः ॥४॥ पुनः पूर्ववत् महाव्याहृतिप्रणवपूर्वकां गायत्रीं त्रिरुक्त्वा । 'ओ३म् विरामोस्तु'—इति वदन्तं गुरुं शिष्यः पादोपसंग्रहपूर्वकं प्रणम्य, विरमेत् ॥ अधीत्यनिराकरणमन्त्रान् पठेदिति ॥ ओ३म् अथातो ऽधीत्याधीत्यानिराकरणम् । प्रतीकं त्विचक्षणम् । जिह्वा मे मधु यद्वचः, कर्णाभ्यां भूरि शुश्रुवे । मा त्व ँ हार्षीच्छ्रुतम्मयि, ब्रह्मणः प्रवचनमसि, ब्रह्मणः प्रतिष्ठानमसि, ब्रह्मकोशोऽसि, सनिरसि, शान्तिरस्य निराकरणमसि, ब्रह्मकोश मे विशः त्वाचा त्वापि दधामि, त्वाचा त्वापि दधामि स्वरकरणकण्ठचौरसदन्त्योष्ठ्यग्रहणधारणोच्चारण शक्तिर्म्मयि भवतु । आप्यायन्तु मे ऽङ्गानि, त्वाक्प्राण

श्चक्षुः श्रोत्रं यशो बलम्। यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु॥ अत्राऽवसरे गुरुरुपदिशति तम्॥ श्लोकैः-हे शिष्य! वेदानवधारय त्वं, तदुक्तकर्माण्यपि साधय त्वम्॥ अज्ञानयोगेन विजृम्भमाणाञ्जातोयदोषान् परिमार्जय स्वान् ॥१॥ विष्णुः शिवो वा परदैवतं वा, फलाविशेषेऽपियथाभिलाषम्। तद्ब्रह्मदृष्ट्या समुपासनीयं, गलत्प्रमादं परमादरेण ॥२॥ चार्वाक-चार्वीक्रमकर्तनासु, वैतण्डिकानां मतिमर्दनासु। यथा क्रमेत प्रतिभा वटूनां, तथा विधा सम्प्रति साधनीया ॥३॥ आयोज्यतां सत्पथरञ्जनाय, मलीमसानां मतभञ्जनाय॥ विशेषता शिष्यपरम्परासौ, हृष्टासु विद्यासु कलोत्तरासु ॥४॥ उत्पद्यतां नाम विलीयतां वा, नवा नवा जातिरहो तया किम्। न यत्र पारस्परिको प्रतीतिः, क्रिया हि सा जातिरनर्गला किम्

॥ ५ ॥ अथाचारात्—अस्मिन्नवसरे ऽपि बटुं पाठार्थं वाराणसीं प्रति प्रस्थापयन्ति। पुनः कालान्तरं मातुलस्तमानयति ॥ तत्र वेदानां ग्रहणे सूत्रम् ॥ अष्टचत्वारिंश द्वर्षाणि वेदब्रह्मचर्य्यञ्चरेत् ॥ द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणं वेति । अध्ययननियमा आचार्येणाहूतोऽधीयीत शयानं चेदासीनः । आसीनञ्चेत्तिष्ठन् । तिष्ठन्तं चेदभिक्रामन्, अभिक्रामन्तं चेदभिधावन् । गुरुमेवं वर्तमानो ब्रह्मचारी ब्रह्मभूयाय कल्पते ॥ इति ॥ अथ-दक्षिणासङ्कल्पः ॥ ॐ अद्येहाऽमुकोऽहममुकशर्मणः बटोः वेदारम्भहोमकर्मणः वेदारम्भकर्मणश्च साङ्ग

वेदारम्भ—नियम—

'गुर्विज्ञो विशेषतः'-इस-वचन से वेदारम्भ में गुरु वेदज्ञ होना चाहिये ॥१॥ 'वेदारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा" ॥२॥ "ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा" ॥३॥ प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ; सावित्रीं चानुपूर्वेण ततो वेदान् समीरयेत् ॥४॥ हस्तहीनन्तु योऽधीते, स्वरवर्ण विवर्जितम् । ऋग्यजुसामभिर्दग्धो, वियोनिमधिगच्छति ॥५॥

तासिद्धयर्थं सादगुण्यार्थञ्च इदं सुवर्ण-
मग्निदैवतं वररूपेणाचार्याय तुभ्यं सम्प्र-
ददे ॥ इति–दद्यात् ॥ आचार्यश्चाशिषं
दद्यात् ॥ ततस्त्र्यायुषकरणम् ॥ त्र्यायुष-
मिति-नारायणऋषिरनुष्टुप्छन्दोऽग्निर्देवता,
त्र्यायुषकरणे–विनियोगः ॥ तत उपविश्य
स्रुवेण भस्मानीयाङ्गेषु विलेपयेत् । त्र्या-
युषं जमदग्नेः इति ललाटे ॥ पुनः पूर्ववत् ॥

## ❀ अथ समावर्तन विधिः ❀

वेदानधीत्य वेदो वा, वेदं वाऽपि यथा-
क्रमम् । अविप्लुतब्रह्मचर्य्यो गृहस्थाऽश्रम-
माविशेत् ॥१॥

तत्र कृतनित्यक्रियः सभार्य्यं आचार्यो ब्रह्मचारिणा सह शुभासने चोपविश्याऽऽचम्य, प्राणानायम्य, गणेशादि पञ्चाङ्गदेवताः सम्पूज्य ॥ सङ्कल्पं कुर्य्यात्–

ॐ अद्येत्यादि० अमुकोऽहममुकराशेरस्य
वटोःस्नातकत्वसिद्धिप्राप्तये समावर्तनकर्म्म
करिष्ये ॥ ततः ॥ 'भो आचार्य ! अहं

स्नास्यामीति'—ब्रह्मचारी गुरोरनुज्ञां प्रार्थ-
येत् ॥ स्नाहीत्याचार्येणोक्ते, ब्रह्मचारी
गुरोः पादौ स्पृशेत् ॥ततः परिश्रितप्रदेशे
आचार्य सन्निहितदक्षिणदिश्युपविष्टे ब्रह्म-
चारिणि आचार्यः कुशैर्हस्तमात्रां भूमिं परि-
समुह्य, कुशानैशान्यां परित्यज्य, गोमयो-
दकेनोपलिप्य, स्रुवमूलेनोत्तरोत्तरक्रमेण
त्रिरुल्लिख्य, अनामिकाङ्गुष्ठाभ्यां मृदमु-
ल्लेखनक्रमेणोद्धृत्य, पुनर्जलेनाऽभ्युक्ष्य,
कांस्यपात्रेण सूर्यनामानमग्निमानीय,
सम्मुखं निदध्यात् ॥ ततः ॥ पुष्पचन्दन-
ताम्बूलवासांस्यादाय ॥ ओमद्यामुकस्य
ब्रह्मचारिणः कर्तव्यसमावर्तनहोमकर्मणि
कृताऽकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगो-
त्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनता-
म्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे ॥ इति
ब्रह्माणं वृणुयात् ॥ ॐ—'वृतोऽस्मीति'-
प्रतिवचनम् ॥ ततोऽग्नेर्दक्षिणतः शुद्धामा-

सनं निधाय, तदुपरि प्रागग्रान् कुशानास्तीर्य, ब्रह्माणमग्निप्रदक्षिणं कारयित्वाऽस्मिन् कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय। 'भवानीति'—तेनोक्ते तदुपरि ब्रह्माणमुदङ्मुखमुपवेशयेत्॥ ततः॥ प्रणीतापात्रं पुरतः कृत्वा, जलेन परिपूर्य, कुशैराच्छाद्य, ब्रह्मणो मुखमवलोक्याऽग्नेरुत्तरतः कुशोपरि निदध्यात्॥ ततः॥ कुशपरिस्तरणम्॥ बर्हिषश्चचतुर्थभागमादायाग्नेयादीशानान्तम्। ब्रह्मणोऽग्निपर्य्यन्तम्॥ नैर्ऋत्याद्वायव्यान्तमग्नितः प्रणीतापर्यन्तम्॥ ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम्॥ पवित्रकरणार्थं साग्रमनन्तगर्भं कुशपत्रद्वयम्॥ प्रोक्षणीपात्रमाज्यस्थाली॥ सम्मार्जनकुशाः॥ उपयमनकुशाः॥ समिधस्तिस्रः॥ स्रुवम्॥ आज्यम्॥ पूर्णपात्रम्। विशेषोपकल्पनीयानि। समिन्धनकाष्ठानि। समिधस्तिस्रः॥ पर्युक्षणा-

र्थमुदकम् ॥ हरितकुशः ॥ अष्टावुदकुम्भाः ॥ धौतवस्त्रम् ॥ औदुम्बरम् ॥ द्वादशाङ्गुलं दन्तधावनकाष्ठं ब्राह्मणस्य ॥ दशाङ्गुलं क्षत्रियस्याऽष्टाङ्गुलं वैश्यस्य च ॥ दधि- तिलाश्च ॥ नापितः । स्नानार्थमुदकम् ॥ उद्वर्तनद्रव्यम् ॥ चन्दनमहते वाससी ॥ यज्ञोपवीते ॥ पुष्पाणि ॥ उष्णीषम् ॥ कर्णा- लङ्कारौ ॥ अञ्जनमादर्शः ॥ नूतनं छत्र- मुपानहौ च, नव्यो वैणवो दण्डः ॥ पवित्र- च्छेदनकुशानां पूर्वपूर्वदिशिक्रमेणासादनी- यानि ॥ इति पात्रासादनम् ॥ ततः ॥ पवि- त्रच्छेदनकुशैः पवित्रे छित्त्वा, सपवित्रक- रेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे प्रक्षि- प्याऽनामिकाङ्गुष्ठाभ्यां गृहीतपवित्राभ्यां तज्जलेनकिञ्चित् त्रिरुत्क्षिप्य, प्रणीतोद- केन प्रोक्षणीपात्रं त्रिरभिषिच्य, प्रोक्षणी- जलेनासादितसर्ववस्तुसेचनम् कृत्वाऽग्नि- प्रणीतापात्रयोर्मध्ये प्रोक्षणीपात्रं निद-

ध्यात् ॥ आज्यस्थाल्यामाज्यनिर्वापोऽधिश्र-
यणम् ॥ ततः शुष्ककुशान् प्रज्वाल्याज्यो-
परिप्रदक्षिणं भ्रामयित्वा, वह्नौ तत्प्रक्षिप्य,
स्रुवं त्रिः प्रतप्य, सम्मार्जनकुशानामग्रैर-
न्तरतो मूलैर्बाह्यतः स्रुवं सम्मृज्य, प्रणीतो-
दकेनाऽभ्युक्ष्य, पुनस्त्रिःप्रतप्याऽग्नेर्दक्षिण-
तो निदध्यात् ॥ तत-आज्यमग्नेरवतार्य,
त्रिःप्रोक्षणीवदुत्पूयाऽऽवेक्ष्य, सत्यपद्रव्ये
तन्निरस्य, पुनः प्रोक्षण्युत्पवनम् ॥ तत
उत्थायोपयमनकुशान् वामहस्ते कृत्वा,
प्रजापतिं (मनसा) ध्यात्वा, (तूष्णीं) घृता-
क्तास्तिस्रः समिधोऽग्नौ प्रक्षिपेत् ॥ पुनरु-
पविश्य, सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमे-
णाग्निमुदक्संस्थं पर्युक्ष्य, प्रणीतापात्रे पवित्रे
निधाय, प्रोक्षणीपात्रं विसर्जयेत् ॥ ततः
पातितदक्षिणजानुर्ब्रह्मणाऽन्वारब्धः, समि-
द्धतमेऽग्नौ स्रुवेणाऽऽज्याहुतीर्जुहुयात् ॥
तत्र तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशे-

षस्य प्रोक्षणीपात्रे प्रक्षेपः ।। ॐ प्राजापत्या-
दिचतुर्णां-मन्त्राणां प्रजापतिऋर्षिस्त्रिष्टु-
पछन्दः प्रजापतीन्द्राग्नीसोमाः देवता,
आज्यहोमे—विनियोगः ।। अग्नेरुत्तर प्रदेशे,
पूर्वाघारमाघारयेत् (मनसा)-ॐप्रजापतये
स्वाहा,इदं प्रजापतये न मम ।। ततोऽग्नेर्द-
क्षिण प्रदेशे, उत्तराघारमाघारयेत्
ॐ इन्द्राय स्वाहा, इदमिन्द्राय न मम ।
इत्याघारौ ।। ततोऽग्नेरुत्तरार्द्ध-पूर्वार्धे-ॐ
अग्नये-स्वाहा,इदमग्नये न मम ।। ततोऽग्ने-
र्दक्षिणार्द्ध-पूर्वार्धे—ॐ सोमाय स्वाहा,
इदं सोमाय न मम ।। इत्याज्य भागौ ।
*ॐअन्तरिक्षाय-स्वाहा, इदमन्तरिक्षाय ।
ॐ वायवे-स्वाहा, इदं वायवे ।। ॐ ब्रह्मणे
स्वाहा,इदं ब्रह्मणे ।। ॐ छन्दोभ्यः-स्वाहा,
इदं छन्दोभ्यः ।। ×ॐ पृथिव्यै-स्वाहा,इदं
पृथिव्यै ।। ॐ अग्नये-स्वाहा, इदमग्नये ।

* यजुराहुतयः, अन्वारब्धं विना । × ऋगाहुतयः ।।

ॐ ब्रह्मणे-स्वाहा इदं ब्रह्मणे ॥ ॐ छन्दो-भ्यः स्वाहा, इदं छन्दोभ्यः ॥ ×ॐ दिवे-स्वाहा, इदं दिवे ॥ ॐ सूर्य्याय स्वाहा, इदं सूर्य्याय ॥ ॐ ब्रह्मणे स्वाहा, इदं ब्रह्मणे ॥ ॐ छन्दोभ्यः-स्वाहा, इदं छन्दोभ्यः ॥ +ॐ दिग्भ्यःस्वाहा, इदं दिग्भ्यः॥ ॐ चन्द्रमसे-स्वाहा, इदञ्चन्द्रमसे ॥ॐब्रह्मणे-स्वाहा, इदं ब्रह्मणे ॥ ॐ छंदोभ्यः-स्वाहा, इदञ्छन्दोभ्यः ॥ *ॐ प्रजापतये-स्वाहा, इदं प्रजापतये ॥ ॐ देवेभ्यः-स्वाहा, इदं देवेभ्यः ॥ ॐ ऋषिभ्यः-स्वाहा, इदं ऋषि-भ्यः ॥ ॐश्रद्धायै स्वाहा, इदं श्रद्धायै ॥ॐ मेधायै-स्वाहा, इदं मेधायै ॥ ॐ सदसस्प-तये स्वाहाः, इदं सदसस्पतये ॥ ॐ अनु-मतये-स्वाहा, इदं मनुमतये ॥ व्याहृतित्र-यस्य प्रजापतिऋर्षिर्गायत्र्युष्णिगनुष्टुप्छ-न्दांसि, अग्निवायुसूर्य्या-देवताः, समावर्त्तन-

× समाहुतयः ॥ + अथर्वाहुतय ॥ * सामान्याहुतयः ॥

होमे विनियोगः ।। ॐ भूः-स्वाहा, इदमग्न
ये, न मम ।। ॐ भुवः-स्वाहा, इदं वायवे
न मम ।। ॐ स्वः स्वाहा, इदं सूर्य्याय,
मम ।। एता महाव्याहृतयः । ॐ त्वन्नो
अग्ने० स त्वन्नोऽग्ने० इति,द्वयोर्मन्त्रयो
र्वामदेवर्षिस्त्रिष्टुप्छन्दोऽग्नी वरुणौ देवते
प्रायश्चित्तहोमे–विनियोगः ।। ॐत्वन्नो
अग्ने व्वरुणस्य व्विद्वान्देवस्यहेडोऽअवया
सिसीष्ठाः । यजिष्ठो व्वह्नितमः । शोशुचा
नो व्विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा
इदमग्नीवरुणाभ्यां न मम ।। ॐसत्वन्नोऽ
ग्ने बमो भवोतीनेदिष्ठोऽअस्याऽउष
व्युष्टौ । अवयक्ष्व नो व्वरुणᳬरराणो व्वी
मृडीकᳬसुहवो नऽ एधि–स्वाहा।।इदमग्नी
वरुणाभ्याम् ।। अयाश्चाग्ने०-इति-वि
ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता, प्रायश्चि
होमे-विनियोगः।।ॐअयाश्चाग्नेस्यनभि
स्तिपाश्च सत्त्यमित्त्वमयाऽअसि अया

यज्ञं वहास्ययानो धेहि भेषज्ञᳬ स्वाहा-इद-
मग्नये ॥ ॐ ये ते शतमितिशुनःशेप-ऋषि-
स्त्रिष्टुप्छन्दो, लिङ्गोक्तादेवताः, प्रायश्चित्त-
होमे-विनियोगः ॥ ॐ ये ते शतं व्वरुण ये
सहस्रं यज्ञियाः पाशा व्वितता महान्तः ।
तेभिर्नोऽअद्य सवितोत व्विष्णुर्व्विश्वे
मुञ्चन्तु मरुतः स्वर्क्काः-स्वाहा, इदं वरु-
णाय, सवित्रे, विष्णवे, विश्वेभ्यो देवेभ्यो,
मरुद्भ्यः, स्वर्केभ्यश्च न मम ॥ ॐ उदुत्तम-
मिति–शुनःशेप ऋषिस्त्रिष्टुप्छन्दोऽग्निर्दे-
वता, प्रायश्चित्तहोमे-विनियोगः ॥ ॐ
उदुत्तमं व्वरुणपाशमस्म्मदबाधमं व्विम–
द्ध्यम ᳬ श्रथाय । अथा व्वयमादित्यव्रते
तवानागसोऽअदितये स्याम-स्वाहा ॥ इदं
वरुणायादित्यायादितये च न मम ॥ ॐप्रजा-
पतये-स्वाहा, इदं प्रजापतये ॥ इति ॥
(मनसा)॥ॐअग्नये स्विष्टकृते-स्वाहा, इद-
मग्नये स्विष्टकृते ॥ संस्रवं प्राश्याऽऽचम्य,

पवित्राभ्यां मार्जनम्। पवित्र प्रतिपत्तिः पूर्णपात्रं सम्पूज्य ॥ ॐ अद्येत्यादि०-अमुकस्य मम समावर्तनाङ्गहवनकर्मणि कृता-कृतावेक्षणरूपब्रह्मकर्म्मणः साङ्गत्वसिद्ध्यर्थं प्रतिष्ठार्थमिदं पूर्णपात्रंसदक्षिणां प्रजापति-दैवतममुकगोत्रायाऽमुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥'ॐ स्वस्तीति'-प्रति-वचनम् ततो ब्रह्मणो ग्रन्थिविमोकः ॥ ॐ सुमित्रिया नऽ इति मन्त्रस्य दध्यङ्ङाथर्व-णऋषिरापो देवताः, शिरः प्रोक्षणमार्जने-विनियोगः ॥ ॐ सुमित्रिया नऽआपऽ ओष-धयः सन्तु-इति पवित्राभ्यां प्रणीताजलेन शिरः सम्मृज्य, ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ॥ स्व-पुरतः प्रणीतापात्रं न्युब्जी कुर्यात् ॥ उप-यमन कुशैर्मार्जनं कुर्यात्। ॐ आपः शिवाः शिवतमाः शान्ताःशान्ततमास्तांस्ते कृण्वन्तु भेषजम्।।ॐदेवागातु-इत्यत्रिऋषिरुष्णिक्

छन्दो, वनस्पतिर्देवता, बर्हिर्होमे-विनियोगः ॥ ॐ देवा गातु विदो गातुं वित्त्वा गातु मित मनसस्पत ऽइदं देवयज्ञꣳस्वाहा त्वातेधाः ॥ इति–बर्हिर्होमः ॥ अथ सुश्रुवाहोमः ॥ आचम्य, प्राणानायम्य, पाणिनाग्नि परि–समूहयति ॥ ब्रह्मचारी स्व दक्षिणहस्तेनेन्धनमादाय, 'ॐ अग्ने सुश्रवः'-इत्यादीनां पञ्च-मन्त्राणां ब्रह्माऋषिर्यजूँषि छन्दांसि, अग्निर्देवता, अग्निसमिन्धने-विनियोगः ॥ (ब्रह्मचारी अग्नेः पश्चादुपविश्य) ॥ ॐ अग्नेसुश्रवः सुश्रवसं मां कुरु ॥ ॐ यथा त्वमग्ने सुश्रवः सुश्रवा ऽअसि ॥ ॐ एवं माꣳ सुश्रवः सौश्रवसं कुरु ॥ ॐ यथा त्वमग्नेदेवानां यज्ञस्य निधिपाऽअसि ॥ ॐ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥

ब्रह्मचारी दक्षिणहस्तेन जलमादाय, ईशानादारभ्येशानपर्यन्तं प्रदक्षिण क्रमेण भ्रामयेत् ॥ ततोऽग्नि जलेन प्रद-

क्षिणं पर्य्युक्ष्य, उत्थाय, घृताक्तां प्रादेशमात्रामेकां पला समिधमादाय जुहुयात् ॥

तत्र मन्त्रः ॥ ॐअग्नय-इति प्रजापतिर्ऋषिराकृतिश्छन्दः, समिद्देवता समिदाधाने विनियोगः ॥ ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यसे एवमहमायुषा मेधया वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्च्चसेन समिन्धे जीवपुत्रो ममाचार्य्यो मेधाव्यहमसान्यनिराकरिष्णुर्य्यशस्वी तेजस्वी ब्रह्मवर्च्चस्यन्नादो भूयास ँ स्वाहा ॥

इति-मन्त्रेण दक्षिणं कर्णं स्पृष्ट्वा होमयेत् ॥ एवं द्वितीयां तृतीयाञ्च समिधं होमयित्वा, उपविश्य–

ॐ अग्ने सुश्रव० इत्यादिपञ्चभिर्मन्त्रैः पूर्ववत्परिसमूहनं पर्य्युक्षणञ्च विधाय, तूष्णीं पाणी प्रतप्य मुखं विमृष्टे ॥ 'ॐ तनूपा ऽअग्न'-इत्यादीनां प्रजापतिर्ऋषिर्बृहती छन्दो, बृहत्यजूँषि-छन्दांसिअग्निर्देवता·

ऽत्युपस्थाने-विनियोगः। ॐ तनूपाऽअग्ग्नेसि तन्वं मे पाहि ॥ ॐ आयुर्दा ऽअग्ग्नेस्या-ऽऽयुर्म्मे देहि ॥ ॐ व्वर्च्चोदाऽअग्नेसिव्व-र्च्चो मे देहि ॥ ॐ अग्ग्ने यन्मे तन्वाऽऊनं तन्मऽआपृण ॥ ॐ मेधाम्मे देवः सविता आद-धातु ॥ ॐ मेधांमे देवी सरस्वती आदधातु ॥ ॐ मेधाम्मे ऽअश्विनौ देवावाधत्तां पुष्कर-स्रजौ ॥ इति प्रतिमन्त्रं ललाटाच्चिबुक-पर्य्यन्तं मुखं प्रोञ्छति ॥ ततः ॥ ॐ अङ्गा-नि च म ऽआप्यायताम्—इति शिरसः आ, पादमङ्गान्यालभेत ॥ ॐ वाक्च म ऽआप्या-यताम्, इति- मुखम् ॥ ॐ प्राणश्च मऽआ-प्यायताम्, इति नासिकाम् ॥ ॐ चक्षुश्चमऽ-आप्यायताम्, इति-चक्षुषी युगपत्। ॐ श्रोत्रञ्च म ऽआप्यायताम्, इति-श्रोत्रे ॥ मन्त्रावृत्या पृथक् २ ॥ ॐ यशोबलञ्च म ऽआप्यायताम्, इति—बाहू ॥ मन्त्रावृत्या पृथक् २ ॥ तत उदकस्पर्शः ॥

अथाऽनामिकयाऽग्नेर्भस्म गृहीत्वा त्र्यायुषाणि कुर्व्वते।

**ॐ त्र्यायुषञ्चमदग्नेः इति–ललाटे॥ ॐ कश्यपस्य त्र्यायुषमिति–ग्रीवायाम्॥ ॐ यद्देवेषु त्र्यायुषम्–इति–दक्षिणांसे॥ मन्त्रावृत्या वामांसे। ॐ तन्नोऽअस्तु त्र्यायुषम्, इति–हृदि॥ ततः॥ सर्वमन्त्रेण सर्वांगे॥**

ततोऽग्न्यभिवादनम्॥ व्यस्तपाणिभ्यां पृथिवीं स्पृशन् वैश्वानरं सम्बोध्याभिवादयेत्॥

**अद्याऽमुकगोत्रोऽमुकप्रवरोऽमुकशाख्यमुकवेदाध्याय्यमुक–शर्माहं, भो अग्ने! त्वामभिवादये॥ इति–वारत्रयम्॥ भो सूर्य! त्वामभिवादये॥ भो गुरो! त्वामभिवादये। तत–आचार्य्यः कथयति, आयुष्मान् भव सौम्येति॥**

ततः–परिश्रितस्याग्नेरुत्तरतो दक्षिणोत्तरस्थितान् प्रागग्रान् कुशानास्तीर्य, तेषु कुशेषु, तीर्थजलपूरितानष्टौ कलशान् स्थापयेत्॥ पुनः पूर्वोक्तविधिना भूरसीति संस्कारञ्च कुर्य्यात्॥ स्वयं प्राङ्मुखो भूत्वा, प्रथमकलशाज्जलमादत्ते॥

* ॐ ये ऽप्स्वन्त-इति प्रजापतिर्ऋषिर-तिजगतीछन्द-आपोदेवता,जलग्रहणे-वि० । ॐ ये ऽप्स्वन्तरग्नयः प्रविष्टागोह्य उपगोह्यो मयूखो मनोहास्खलो विरुजस्तनू रेदूषुरिन्द्रियहातान् विजहामि यो रोचनस्तमिह गृह्णामि ॥

इति-जलं दक्षिणहस्तचुलुकेन जलं गृहीत्वाऽऽत्मानमभिषिञ्चति

ॐ तेनेति-प्रजापतिर्ऋषिर्यजुश्छन्द, आपो देवता, आत्मान मभिषेचने वि० ॥ ॐ तेनमामभिषिञ्चामि । श्रियै यशसे ब्रह्मणे ब्रह्म वर्च्चसाय ॥ इति ॥ [ततो द्वितीयकलशाज्जलमादत्ते] ॐ ये ऽप्स्वन्त—इति मन्त्रेणैवा ऽष्टकलशाज्जलग्रहणं विधेयम् ॥ अभिषेके तु मन्त्रविशेषः ॥ ॐ येनेति-प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवता, अभिषेचने-वि० ॥ ॐ येन श्रियमकृणुतां येनावमृशता ँ सुरान्। येनाक्ष्या-

* इस मन्त्रका उच्चारण करके आम्रपल्लव द्वारा आठों-कलशोंमें से जल-ग्रहण करना चाहिये ।अभिषेक-मन्त्र सबके पृथक् २ आगेलिखेहैं।

वभ्यषिञ्चतां यद्वां तदश्विना यशः ॥२॥ ततस्तृतीयकलशात्—ॐ आपो हिष्ठेति· सिन्धुद्वीपऋषिर्गायत्रीच्छन्द-आपो देवता, अभिषेचने-वि० ॥ ॐ आपो हिष्ठा मयो० ॥३॥ अथ चतुर्थकलशात् ॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उश· तीरिव मातर-(इति सिञ्चेत्) ॥ ४ ॥ ततः पञ्चम कलशात् ॥ ॐ तस्मा ऽअर· ङ्गमा० ॥५॥ ततः षष्ठसप्तमाऽष्टमकल· शेभ्यो 'येऽप्स्वन्तरग्नय'-(इति मन्त्रेण जल· मादाय तूष्णीमभिषेचयेत्) ॥

ततोऽभिषेकावशिष्टेन जलेन सहस्रधारां शिरसि धृत्वा, स्नायात् ॥ अथ मेखलोन्मोकः। तत्र। पूर्वधृतां मेखलाञ्च वटुः मन्त्रं पठन् स्वयमेव शिरोभागेन मोचयेत्—

ॐ उदुत्तममिति-शुनःशेप ऋषिस्त्रिष्टु· पछन्दः वरुणो देवता, मेखलोन्मोके—विनि· योगः ॐ उदुत्तमं व्वरुणपाशमस्मदबा· धमस्व्विमद्ध्यम ७ श्रथाय। अथा व्वयमा·

दित्यव्रते तवानागसो ऽअदितये स्याम ॥

मेखलामुन्मुच्य निधायेति सूत्रात्-साहचर्य्याच्च दण्डमजिनं तूष्णीं भूमौ निधाय। त्रिराचामेत ॥ ततः ॥ ब्रह्मचारी अन्यद्वस्त्रं परिधायोत्तरीयञ्च धृत्वा त्रिराचम्याऽऽदित्यमुपतिष्ठेत् ॥

ॐ उद्यन्भ्राजेति-प्रजापतिर्ऋषिः,शक्वरीछन्दः, आदित्यो-देवता,उपस्थाने-विनियोगः ॥ ॐ उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्। प्रातर्यावभिरस्थाद्दश सनिरसि दशसनिम्मा कुर्व्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्व्वाविदन्मा गमय। उद्यन् भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात् सायं यावभिरस्थात्। सहस्रसनिरसि सहस्रसनिं मा कुर्व्वाविदन्मागमय ॥

इति–मन्त्रेण चोर्ध्वबाहुः सूर्योपस्थानं कुर्य्यादिति ॥ ततो दधितिलान्वा दक्षिणहस्तगतसोमतीर्थेन प्राश्य, आचम्य, जटालोमनखानि संहृत्य, वपननिमित्तकं शीतलोदकेन स्ना-

त्वा, आचम्य, ततः द्वादशाङ्गुल-दशाङ्गुला-ऽष्टाङ्गुल-दीर्घेण कनिष्ठिकाग्रस्थूलेनोदुम्बरकाष्ठेन ब्राह्मणक्षत्रियविट्-क्रमेण दन्दधावनं कुर्य्यात्-

**ॐ अन्नाद्यायेत्याथर्वणऋषिरनुष्टुप्छन्दः, सोमोदेवता, दन्तधावने-विनि० ॥ ॐ अन्नाद्याय व्यूहध्व ँ सोमो राजाऽयमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च ।इति।**

दन्तकाष्ठं त्यक्त्वाऽऽचम्य सुगन्धिद्रव्ययुक्तेन तैलयवादि-चूर्णेन शरीरोद्वर्तनं कृत्वा, तप्तोदकेन सशिरस्क स्नात्वा, आचम्य, चन्दनाद्यनुलेपनं गृहीत्वा, अनुलेपनेनहस्तावुपलिप्य नासिकयोर्मुखस्य चोपगृह्णीते मन्त्रेण-

**प्राणापानावित-प्रजापतिर्ऋषिर्यजुः-प्राणापानादिलिङ्गोक्ता देवताश्चन्दनोपसंग्रहणे-विनियोगः ॥ ॐ प्राणपानौ मे तर्पय, नासिकयाम्। चक्षुर्मे तर्पय, चक्षुषोः ॥ श्रोत्रं मे तर्पय, श्रोत्रयोः ॥**

तत-अपसव्यं विधाय, पाणी प्रक्षाल्य, आस्तृतकुशत्र-योपरि तदवनेज्नं जलं दक्षिणाऽभिमुखः पितृतीर्थेन दक्षि-णस्यां दिशि निषिञ्चेत् ॥

ॐपितर-इति प्रजापत्यशिवसरस्वतीन्द्रा-ऋषयो, यजुः पितरो-देवता, निषेचने-वि० ॥ ॐ पितरः शुन्धध्वम् ॥

इति पाण्योरवनेजनजनं शनैः शनै भूमौ निषिञ्चेत् ॥ पुनः सव्येनोदकस्पर्शः ॥ ततोऽनुलेपानन्तरं स्वशरीरे केशवा-दिनाम मन्त्रैर्द्वादशतिलकान् धारयेत् ॥ तद्यथा-

ललाटे-ॐकेशवाय नमः ।१। उदरे-ॐनारा-यणाय नमः ॥२॥ हृदि-ॐ माधवाय नमः ॥३॥ कण्ठकूपके-ॐ गोविन्दाय नमः ॥४॥ दक्षिण-कुक्षौ-ॐ विष्णवे नमः ॥५॥ वाम-कुक्षौ-ॐ वामनाय नमः ॥६॥ दक्षिण-बाहौ-ॐ मधुसूदनाय नमः ॥७॥ वाम-बाहौ-ॐ श्रीधराय नमः ॥८॥ कर्णमूलयोः-ॐ त्रिविक्रमाय नमः ॥९॥ पृष्ठे-ॐ पद्म-नाभाय नमः ॥१०॥ ककुदि-ॐ दामोद-राय नमः ॥११॥ शिरसि-ॐ वासुदेवाय नमः ॥१२॥ ॐ इति ललाटे वंशपत्राकृ-तिकं मध्यशून्यं धारयेदिति ॥

चैवं तिलकं धृत्वा मन्त्रं जपेत्—

ॐ सुचक्षा०-इति-प्रजापतिर्ऋषि-र्यजुलिङ्गोक्ता-देवताः, जपे-विनियोगः ॥ ॐ सुचक्षाऽअहम क्षीभ्याम्भूमासꣳसुवर्च्चा मुखेन। सुश्रुत्कर्णाभ्यां भूयासमिति । अथोपकल्पितनूतनवासांसि परिदधीत ॥ ॐ परिधास्यै०—इत्याथर्वणऋषिः, पंक्तिश्छन्दो, वासो-देवता, नूतनवासः परिधाने—विनियोगः ॥ ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतञ्च जीवामि शरदः पुरूची रायस्पोषमभिसम्व्ययिष्ये। (द्विराचम्य)।

ततः मन्त्रेण द्वितीययज्ञोपवीतधारणं कुर्यात् । ब्रह्मचारिण एकन्तु, स्नातकस्य द्वे । बहूनि चेति-वचनात्॥ अथोत्तरीयम् ॥

ॐ यशसा मेत्याथर्वणऋषिः पंक्तिश्छन्दो लिंगोक्तादेवता उत्तरीयपरिधाने वि० ॥ ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृह

स्पती । यशो भगश्च मा विन्दद्यशो मा प्रतिपद्यताम् ॥ इति ॥ एक एव वासश्चेत्तदा पूर्वोत्तरेणाच्छादयेत् ॥

ततआचम्य ॥ मालारूपाः सुमनसो हस्ताभ्यां प्रतिगृह्णाति–

ॐ या आहरदिति-भरद्वाजऋषिरनुष्टुप्छन्दः, सुमनसो–देवताः, पुष्पमालाग्रहणे–वि० ॥ ॐ याऽआहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय । ताऽअहं प्रतिगृह्णामि यशसा च भगेन च (हस्ताभ्यां गृहीत्वा) ॥ इति ॥ अथाबध्नीते ॥ यद्यशोप्सरसामिति-भरद्वाजऋषिरनुष्टुप्छन्दः, सुमनसो–देवताः पुष्पमालाबन्धने–वि० ॥ ॐयद्यशोप्सरसामिन्द्रश्चकार विपुलम्पृथु । तेन संग्रथिताः सुमनसऽआबध्नामि यशो मयि ॥ इति ॥ (अथोष्णीषेणशिरोवेष्टयते ॥ तत्र मन्त्रः) ॥ ॐ युवा सुवासा इत्यङ्गिराऋषिर्बृहतीछन्दो, बृहस्पतिर्देवता, शिरोवेष्टने–वि० ॥ ॐ

युवा सुवासाः परिवीतऽआगात् सऽउश्रेयान् भवति जायमानः । तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥

इति ततोऽन्यान्यपि कञ्चुकादीनि वासांसि परिधाय, कर्णवेष्टको [कुण्डले] परिधत्ते ॥

ॐ अलङ्करणमितिप्रजापतिऋर्षिर्यजुश्छन्द,अलंकरणं दैवतमलंकरणे-विनियोगः॥

ॐ अलंकरणमसि भूयोऽलंकरणम्भूयात् ॥ इति—मन्त्रेण कुण्डले कर्णयोर्ददाति ॥ अथाक्षिणी, अञ्जनेनानंक्ते ॥ ॐ वृत्रस्येति-प्रजापतिऋर्षिर्यजुश्छन्द, अञ्जनं-देवता, अक्ष्यञ्जने-विनियोगः ॥ ॐ व्वृत्रस्यासि कनीनकश्चक्षुर्द्दा ऽअसि चक्षुर्मे देहि ॥

पूर्वं दक्षिणनेत्रे,तत अनेनैव मन्त्रेण वामनेत्रेऽञ्जनं कुर्यादिति ॥ ततश्चाऽऽत्मदर्शन-मादर्शे ॥

ॐ रोचिष्णुरिति-प्रजापतिऋर्षिर्यजुश्छन्दः, सूर्य्योदेवता, आदर्शप्रेक्षणे—विनियोगः ॥ ॐ रोचिष्णुरसि ॥ इति ॥ तत-

श्छत्रं प्रतिगृह्णाति। बृहस्पतेश्छदिरिति-गौतमऋषिर्बृहती छन्दः छत्रं देवता, छत्र-ग्रहणे-विनियोगः॥ ॐ बृहस्पतेश्छदिरसि। पाप्मनो मामन्तर्द्धेहि तेजसो यशसो मान्त-र्द्धेहि ॥(तत-उपानहौ युगपत्प्रतिमुञ्चते)। ॐ प्रतिष्ठे स्थ०-इति जमदग्निऋर्षिर्वि-राट्छन्दो, लिंगोक्ता देवता, उपनत्प्र-तिमोके-विनियोगः ॥ ॐ प्रतिष्ठे स्थो विश्वतोमापातम् ॥ तदन्ते वैणवं दण्डं धारयति। ॐ विश्वाभ्य० इति-याज्ञ-वल्क्यऋषिर्यजुश्छन्दो, दण्डो-देवता, दण्ड-ग्रहणे-विनियोगः ॥ ॐ विश्वाभ्यो माना-ष्ट्राभ्यस्परिपाहि सर्वतः ॥ इति मन्त्रेण दण्डग्रहणं कुर्यात् ॥ (अत्र च मातृपूजनादि-पूर्णपात्रदानान्तमाचार्य्यस्य कृत्यम्॥ तथा-ऽष्टकलशाऽभिषेकादिदण्डग्रहणान्तं स्नात-कस्य वटोः कृत्यम्) वासश्छत्रोपानहद्दण्ड-व्यतिरिक्तानि दन्तधावनादीनि मन्त्रवन्ति

सदा कुर्य्यात् ॥ वासः प्रभृतीनि तु नूतनान्येव मन्त्रवन्ति धारयेत ॥ तत—आचार्यं सम्पूज्य, वरं (गोदानं) दद्यात् ॥ "गौर्ब्राह्मणस्य वरमुच्यते" ॥ तत्र सङ्कल्पः ॥ ॐ अद्येहामुकोऽहं मम स्नातकत्वसिद्धये कृतस्य समावर्त्तनकर्म्मणः साङ्गतासिद्ध्यर्थं सादगुण्यार्थमिमां गां गोनिष्क्रयीभूतं सुवर्ण रजतं वा वररूपेण आचार्याय तुभ्यं सम्प्रददे ॥ ॐ तत्सत् ॥ इति-दत्वा ॥ तत आचार्यमुखतःस्नातकोनियमान्शृणुयात्सूत्राणिअथ स्नातकस्यनियमान् वक्ष्यामः×नृत्यगीतवादित्राणिन कुर्यात्॥ नृत्यंतालाद्यनुकार्य्यङ्गविक्षे

+ ब्रह्मचारियों के मुख्य नियम—रात्रि में अपने गाँव से दूसरे गाँव में न जाय। वर्षा में कहीं यात्रा न करे। मार्ग छोड़कर न चले। किसी वृक्ष पर न चढ़े और न फल ही तोड़े। कुएें में न झाँके। ऊपर से न कूदे। घोड़े पर न चढ़े। सूर्योदय एवं सूर्यास्त-काल-पर शयन न करे। सूर्य को उदय एवं अस्त होते हुए न देखे। पानी में सूर्य की एवं अपनी छाया न देखे। युवा-स्त्रियों से एकान्त-भाषण न करे। किसी से अश्लील-भाषण न करे। स्त्रियों के मध्य में न बैठे। हरि-कीर्तन के अतिरिक्त गाना, बजाना तथा नाच कदापि न करे। नग्न स्नान न करे। हिजड़ों को देखकर न हँसे।

पः वादित्रं तालाद्यनुकारि चतुर्विधम्, एतानि
स्वयं न कुर्यात्, न तत्र गमनम् ॥ क्षेमे सति
न रात्रौ ग्रामान्तरं गच्छेत् ॥ न कूपेऽवेक्षेत् ॥
गांधयन्तीं परस्मै नाचक्षीत ॥ शस्यकुशादि-
मत्यां भूमौ मूत्रपुरीषोत्सर्गं न कुर्य्यात् ॥
वृक्षारोहणं, फलत्रोटनं च न कुर्यात् ॥ अमा-
र्गेण न गच्छेत्, न विषमभूमिं लंघयेत् ॥
नग्नो न स्नायात्, न सन्धिवेलायां शयीत
गच्छेद्वा ॥ अश्लीलं वाक्यं नोपवदेत् ॥ जल-
मध्ये सूर्यच्छायां न पश्येत् ॥ उदयास्तस-
मये सूर्यं न पश्येत् ॥ उदके नात्मानं पश्येत् ॥
अजातलोम्नीं प्रमत्तां पुरुषाकृतिं षण्ढाञ्च
स्त्रियं न गच्छेत् ॥ क्लीबं दृष्ट्वा नोपह-
सेदिति—धर्मशास्त्रविहितसाधारणनियमाः ॥
अथ त्रिरात्रनियमाः—न मृन्मये
पिबेत्तोयं, नाद्यान्मासञ्च कर्हिचित् । स्त्री-
शूद्रकृष्णशकुनिशुनां दर्शनकं त्यजेत् ॥१॥
तत्सम्पर्कान्न पानीयं, तैः सार्धंभाषणं तथा ॥

आतपे ष्ठीवनं मूत्रं, पुरीषं नैव संत्यजेत्
॥२॥ नान्तर्दधीत स्वात्मानं, सूर्य्यात्त-
प्तोदकेन च। अर्थाहृतेन च स्नायादित्याह
परमा श्रुतिः ॥३॥ सत्या वाणी प्रवक्त-
व्य, विधेयं गुरुवन्दनम्। पञ्चयज्ञा प्रकर्त-
व्या, इत्याह परमा श्रुतिः ॥४॥ इति धर्म-
शास्त्रविहित त्रिरात्रनियमाः ॥ ततो गृह-
स्थाऽऽश्रमे त्वयैवं कार्य्यमिति-'शिक्षयति
गुरुः' ॥ ते श्लोकाः ॥ "ते पञ्च यज्ञाः सम-
यानुसारं, सम्पादनीयाः सहसान्ध्यकृत्याः।
येऽनुष्ठिताः लोकफलाय पञ्च-प्राणा इवा-
न्ये घटयन्ति शक्तिम् ॥१॥ प्रदीपिकावद्
गृहकान्तिमूला, मणिप्रभावान्नयनाऽभिरा-
माः। स्त्रियो निलिप्य प्रतिमा इवारा,
सम्भावनीया बहुनादरेण ॥२॥ श्रद्धाऽ
भक्तिर्विहिता यदर्थं, विद्यापि सा तेद्य समा-
प्तिमेता। स साम्प्रतं स्वं सदनं समेहि
निदेशमेनं परिपालय त्वम् ॥३॥ परस्पर-

द्वेषविशेषमूला, ये सन्त्युपास्तौ विविधा विकल्पाः। श्रुतीः स्मृतीः पूर्वकृतीः प्रदर्श्य, ते वारणीया नितरां त्वयापि ॥४॥ (गत्वा च तत्र) विद्याविकासाय मठाऽभिधेयास्तत्रोच्चकैश्छात्रगणा निधेयाः। तत्रापि शुद्धा विधयो विधेया यैस्ते स्युरभ्युन्नतनामधेयाः ॥५॥ (ततो नवग्रहाऽभिषेकतिलकञ्च)

ब्राह्मणदक्षिणाभोजनान्तानि विदध्यात् ॥

अद्य० मम चूड़ोपनयनवेदाऽऽरम्भसमावर्तनकर्म्मसु पूर्वाङ्गत्वेन पूजिता इमाः स्वर्णादिप्रतिमा अग्न्यादि देवता नवग्रह प्रीतये अमुक गो० अ० श० ब्राह्मणेभ्यो विभज्य दास्ये। प्रतिष्ठार्थञ्चतासां दक्षिणांचदास्ये।

इति--सङ्कल्प्य ॥ प्रतिमाभिः सह भूयसीं दक्षिणां दद्यात् ॥ तत उत्तर पूजनं विधाय ॐ पूर्णेति० पूर्णाहुतिं दत्वा, ब्राह्मणद्वाराभिषेकं गृह्णीयात्, तत्र तिलकादिपुरःसरमेव तत्। तत्र गोदानमप्यत्रावसर एवेति ॥

"ॐ यान्तु देवगणाः०"-उक्त्वा पूजितदेवताः विसर्जयेत् ॥ ततो ब्राह्मणान् भोजयि-

**त्वा, दक्षिणां दत्त्वा च स्वयमिष्टबन्धुभिः सह भुञ्जीत ॥ यथासुखं विरमेच्च ॥**

हमारे देश में ऋषि-मुनियों ने बालकों को तेजस्वी एवं विद्या-बल-बुद्धि-सम्पन्न बनाने के लिए षोडस-संस्कारों में यज्ञोपवीत-संस्कार को ही मुख्य माना है। श्रुति स्मृतियों में यह 'उपवीत-संस्कार' केवल ब्राह्मणों के लिए ही नहीं अपितु क्षत्रिय एवं वैश्यों के लिए भी बताया है, जिससे कि सभी ब्रह्म-तेजस्वी एवं वेदाऽधिकारी बन सकें।

'द्वाभ्यां जन्म-संस्काराभ्यां जायत्'--इति द्विजः।

'जन्मना जायते शूद्रस्संस्काराद् द्विज उच्यते'।

अर्थात्, प्रथम-जन्म मातृ-गर्भ द्वारा तथा द्वितीय-जन्म उपनयन-संस्कार द्वारा-इस प्रकार दो बार जन्म होने के कारण ब्राह्मण, क्षत्रिय तथा वैश्य-तीनों ही द्विजत्व को प्राप्त होते हैं। द्विज-मात्र के लिए सर्व-प्रथम सन्ध्योपासना-कर्म बताया है। यथा- 'विप्रो वृक्षस्तस्य मूलञ्च सन्ध्या, वेदः शाखा धर्म्म-कर्माऽदिपत्रम्''-अर्थात् विप्र ही मानो वृक्ष-स्वरूप हैं, उनकी सन्ध्योपासना ही जड़ है, चारों वेद शाखायें हैं तथा धर्मकर्मादि पत्ते हैं।

सन्ध्याहीनो ऽशुचिर्नित्यमनर्हः सर्वकर्म्मसु।
यदन्यत्कुरुते कर्म, न तस्य फलभाग्भवेत् ॥

अर्थात्-''ब्राह्मण, क्षत्रिय और वैश्य यदि सन्ध्या-हीन हों

तो वे सर्वथा अपवित्र होते हैं उन्हें किसी पुण्य-कर्म का भाग नहीं मिलता।" बिना यज्ञोपवीत-धारण किये सन्ध्योपासन कर्म कदापि नहीं हो सकता, और न धर्मशास्त्रों द्वारा यज्ञकर्म उद्यापन, ग्रहशान्ति एवं प्रतिष्ठा-आदि करने का ही अधिकार मिलता है। विवाह-संस्कार तो बिना यज्ञोपवीत के हो ही नहीं सकता। अतः यज्ञोपवीत-धारण करना तीनों वर्णों-के लिए मुख्य है। तेज वृद्धि एवं पराक्रम-वृद्धि के लिये गायत्री-मन्त्र जपनाभी परमावश्यक है। ब्राह्मणों के लिए 'ब्रह्म-गायत्री' मन्त्र, क्षत्रियों के लिये 'त्रैष्टुभी-गायत्री' मन्त्र तथा वैश्यों के लिए-'जागती-गायत्री' मन्त्र-ये तीनों-मन्त्र वर्ण-भेदसे पृथक् २ वेदों में बताये गये हैं। वैसे सभी अधिकारी गुरु-दीक्षा लेकर 'ब्रह्म गायत्री'-मन्त्र जप सकते हैं।

## उपनयन-कालनिर्णय—

'विप्रो गर्भाऽष्टमे वर्षे, क्षत्र एकादशे तथा।
द्वादशे वैश्यजातिस्तु, व्रतोपनयन मर्हति।' (व्यासस्मृतौ १।१८)

अर्थात् ब्राह्मणों को गर्भ से आठवें-वर्ष में, क्षत्रियों को ग्यारहवें वर्ष में, और वैश्य जाति के लिए बारहवें वर्ष में ब्रह्मचर्य्य-व्रत, दीक्षा, एवं यज्ञोपवीत धारण करना चाहिये, किसी असुविधा के कारण यदि-संस्कार न हो सके तो 'मनु' के अनुसार इससे द्विगुने वर्षों में भी संस्कार किया जा सकता है

"आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आद्वाविंशत्क्षत्रबन्धोराचतुर्विंशतेर्विशः'। इति मनुस्मृतिः २।६५।।

अर्थात्-ब्राह्मण-१६ वें क्षत्रिय-२२ वें, तथा वैश्य २४वें वर्ष पर भी उपवीत-धारण कर सकते हैं। किन्तु वे उपनयन संस्कारका परित्यागन कदापि न करें। कारण कि-द्विजों के लिये निम्न-लिखित नियम बताये हैं। यथा—

'बिना यज्ञोपवीतेन, तोयं यः पिवति द्विजः'।
उपवासेन चैकेन, पञ्च-गव्येन शुद्ध्यति।१॥
'बिना यज्ञोपवीतेन, विण्मूत्रोत्सर्गकृद्यदि'।
ह्युपवासद्वयं कृत्वा' दानैर्होमैस्तु शुद्ध्यति॥२॥

अर्थात्-जोद्विज बिना यज्ञोपवीत-धारणकिये यदि जल-पान भी करता है, तो वह एक दिनके उपवास करनेसे एवं -पञ्चगव्य-प्राशन से शुद्ध होता है, तथा जो मल-मूत्र त्यागते समय कानों में जनेऊ नहीं लपेटता, तो वह दिनके उपवास करने से एवं दान होमादि क्रिया करने से शुद्ध होता है।

'सूतके मृतके चैव, गते मासचतुष्टये।
नवयज्ञोपवीतीनि, धृत्वा जीर्णानि संत्यजेत्'॥
[जीर्णयज्ञोपवीतानि शिरोमार्गेण संत्यजेदिति०]

अर्थात्--सूतक एवं मृतक-स्नानके अनन्तर तथा चार मास व्यतीत हो जाने पर नूतन-यज्ञोपवीत धारण कर लेना चाहिए, और जीर्ण यज्ञोपवीत का शिरोमार्गसे परित्यागन करे। पूर्व-कालसें वृद्धा-ब्राह्मणी यज्ञोपवीत निर्माण के लिए नई कपास का सूत्र [जो कहीं से खण्डित न हो]काताकरती थीं। उसी सूत्रसे मन्त्रों द्वारा सप्रामाणिक यज्ञोपवीत निर्माण

किया जाता था। वर्णोंमें अधिकारी भेदसे कुशा एवं मूँज द्वाराभी यज्ञोपवीत बनता था। आचार्य युद्ध कालके समय क्षत्रियों की रक्षाके लिए,'यह यज्ञोपवीत युद्ध में कहीं खण्डित न हो जाय ? इस कारण'-स्वर्णके तारोंका यज्ञोपवीत मन्त्रों द्वारा बनाया करते थे। किन्तु आजकल 'कपास-सूत्र' का ही यज्ञोपवीत बनाया जाता हैं। हमारे पूर्वाचार्योंने वेद-मत लेते हुए संस्कार-पद्धतियों में वर्ण-भेद द्वारा सफेद-सूत्र का यज्ञोपवीत ब्राह्मणोंको, मँजीठ वा गेरू आदिसे रँगा हुआ [लाल वर्णका] क्षत्रियोंको, तथा केशर व हल्दी से रंगा हुआ [पीत-वर्णका] वैश्योंको सात्विकादि-स्वभावानुसार पृथक्२ धारण करना बतलाया है।इसी प्रकार उन्होंने वर्ण-भेदके अनु-सार-ब्राह्मणोंकी मौञ्जी-मेखला,क्षत्रियों की धनुर्ज्या-मेखला एवं वैश्यों की मौर्वी-मेखला सप्रामाणिक पृथक् वर्णनकी हैं।

**चर्म**—ब्राह्मणोंके लिए-कृष्ण [काला] मृग-चर्म,क्षत्रियों के लिये-रुद्र [लाल]मृग-चर्म एवं वैश्योंके लिए पीतवर्ण का मृग-चर्म धारण करनेका विधान पद्धतियोंमें लिखा है।

**दण्ड**—ऋषियोंने ब्राह्मणोंके लिए शिखा-पर्यन्त लम्बा पलाश, ढाक अथवा बिल्व का दण्ड, क्षत्रियों के लिए ललाट पर्यन्त लम्बा बड़ वा खैरका दण्ड,तथा वैश्योंके लिए नासिका पर्यन्त लम्बा गूलर अथवा पीपलका दण्ड धारण करना बताया है। किसी आचार्य का मत है कि-अभाव में सभी पालाश-दण्ड धारण कर सकते हैं।

यज्ञोपवीत उत्पत्तिः--

ब्रह्मणा निर्मितं सूत्रं, विष्णुना त्रिवलीकृतम् ।
रुद्रेण दीयते ग्रन्थिः, सावित्र्या त्वभिमन्त्रितम् ॥

अर्थात्-अपनी उत्पत्ति के साथ-साथ ब्रह्माजी ने प्रथम यज्ञोपवीत सूत्र को निर्मित किया, विष्णु ने उसे त्रिवल किया तथा रुद्र भगवान ने उसमें ग्रन्थि दी और सावित्री ने मन्त्रों द्वारा अभिमन्त्रित किया ।

स्तनादूर्ध्वमधो नाभेर्न धार्यं तत्कथञ्चन ।
ब्रह्मचारिण एकं स्यात्, स्नातस्य द्वे बहूनि वा ॥

(इति मदनपारिजाते हरिहरभाष्ये)

## ❀ अथ वाग्दानविधिः ❀

तत्र यथाऽऽचारं निश्चिते विवाहात्पूर्वं कन्यापिता वाग्दानं करोति ॥ ततः कृत सविधः कन्यापिता जामातृपितरमाहूय, निर्विघ्नार्थं गणेशवरुणौ सम्पूज्य---

**ॐ अद्येहाऽमुकोऽहं करिष्यमाणकन्यादानकर्म्मणः पूर्वाङ्गत्वेन वाग्दानं करिष्ये ॥**

इति-सङ्कल्प्य ॥ कन्याविधिवदिन्द्राणीपूजनं कुर्य्यात् । तत्र पूर्वं सङ्कल्पः ॥

ॐ अद्येहाऽमुकगोत्रोत्पन्नाऽमुकराशिर-मुकी देव्यहं सर्वसौभाग्यसमृद्धये स्वर्णादि-मूर्तौ इन्द्राण्याः पूजनं करिष्ये ॥ इति सङ्क-ल्प्य ॥ ॐ अदित्यैरास्नासीति–दध्यङ्ङा-थर्वण–ऋषिर्यजुश्छन्द इन्द्राणीदेवतेन्द्राण्या-वाहने–विनियोगः ॥ ध्यानम् ॥ वामे करे प्रकर्तव्या, सौम्यासन्तानमञ्जरी। वरदा मण्डिता भूषैर्द्विभुजा सर्वदा शची ॥ ऋक् ॥ ॐ अदित्यै रास्नासीन्द्राण्या ऽउष्णीषः। पूषासि घर्माय दीष्व ॥ ॐ भूर्भुवः स्वः इन्द्राणीहागच्छेह तिष्ठ ॥ आवाहनम् ॥ देवेन्द्राणि महाभागे ! सर्वसौख्यपरायणे ॥ आगच्छ मम कल्याणं साधयस्व शिवप्रदे ॥ (ततः पाद्यादिभिः सम्पूजयेत् ॥ पूजामन्त्रौ)-देवेन्द्राणि नमस्तुभ्यं, देवेन्द्रप्रियभामिनि। वरं सौभाग्यमारोग्यं, पुत्रलाभञ्च देहि मे

---

देशाचार से-कन्यापिता वाग्दानार्थं कहीं-२ वरके पिताको, तथा कहीं-कहीं वर को ही निमन्त्रित करता है।

॥१॥ धान्यं देहि धनं देहि, पशून् देहीन्द्र-भामिनि ! यशो देहि सुखं देहि, सर्वकार्य-करी भव ॥२॥

इति मन्त्राभ्यामिन्द्राणीं सम्पूज्य-प्रार्थयेत् ॥

इन्द्राणीन्द्रपदस्थे त्वं, ज्ञानतोऽज्ञानतो मया।
यत्पूजितासि वरदे क्षमस्व प्रणतिप्रिये ॥

ततः । कुंकुमाक्तानि सद्रव्याणि नारिकेलादिपञ्चफलान्यादाय, कर्त्ता गोत्रोच्चारणं कुर्य्यात् ॥

अद्यामुकगोत्रोऽमुकप्रवरो ऽमुकवेदान्तर्गताऽ मुकवेदाध्यायी, अमुकशर्माऽहं, अमुकगोत्रोत्पन्नाया ऽमुकप्रवराया ऽमुकवेदाध्यायिने ऽमुकशर्मणः प्रपौत्राय, अमुकशर्मणः पौत्राय, अमुकशर्मणः पुत्राय, अमुकशर्मणे विष्णुस्वरूपिणे कन्यार्थिने वराय। अमुकगोत्रोत्पन्न स्यामुकप्रवरस्यामुकवेदान्तर्गतामुकशाखाध्यायिनोमुकशर्मणः प्रपौत्रीम्, अमुकगोत्रस्यामुकप्रवरस्यामुकशाखाध्यायिनोमुकशर्मणः पौत्रीम्, अमुकगो-

त्रस्यामुकप्रवरस्यामुकशाखाध्यायिनोमुक–
शर्मणः पुत्रीम्, अमुकनाम्नीं श्रीरूपिणीं
वरार्थिनीमिमां कन्यां, ज्योतिर्विदादिष्टे
सुमुहूर्त्ते तुभ्यं दास्ये ॥

इति वारत्रयं गोत्रोच्चारणं कृत्वा, लग्नसामयिकग्रह-
निमित्तदानानि च कृत्वा, स्थालीस्थयज्ञोपवीतफलस्वर्णांगुली-
यवस्त्रतण्डुलहस्तः कन्यापितोत्थाय–

वाचा दत्ता मया कन्या, पुत्रार्थं स्वीकृता
त्वया । कन्यावलोकनविधौ निश्चितस्त्वं
सुखी भव ॥१॥ अष्टवर्षादिका कन्या, पुत्र-
वत्पालिता मया । त्वत्पुत्राय प्रदास्यामि,
स्नेहेन परिपाल्यताम् ॥२॥ व्यङ्गः क्लीबः
पङ्क्तिहीनो, त्रिर्विद्यो व्यसनी ऋणी ॥
तावत्तव सुतो न स्यात्कन्यां दास्यामि
निश्चयात् ॥३॥

इति प्रतिज्ञापूर्वकं वरपित्रे स्थालीस्थद्रव्यं दद्यात् ॥
'स्वस्तीति'-प्रतिवचनम् ॥ ततो वरगृहाऽऽगतसौभाग्यद्रव्यं
सुवस्त्रादिकञ्च कन्यायै स्वस्तिवाचनपुरस्सरं सुवासिनीद्वारा
परिधापयेत् ॥ तत उभयतो ब्राह्मणादिभ्योदक्षिणां दद्यात्,

तिलकादिञ्च कुर्य्यात् ॥

## ❀ अथ स्तम्भपूजनविधिः ❀

अद्येत्यादि० अमुकशर्माऽहं, ममास्याः कन्यायाः बीजगर्भसमुद्भवैनोनिवर्हणपूर्वकदाम्पत्यैश्वर्य्याऽभिवृद्धये, करिष्यमाणविवाहसंस्कारकर्मणि षोडशवरुणपूजनपूर्वकं सस्थूणाशक्तिनागमातृकब्रह्मादिषोडशकदलीमय-स्तम्भपूजनञ्च करिष्ये ॥ * [अन्तरीशाने] पूर्वं वरुणं सम्पूज्य, ॐ ब्रह्मयज्ञानमिति-गोतमऋषिस्त्रिष्टुप्छन्दो,ब्रह्मादेवता, ब्रह्मावाहने-विनियोगः ॥ अथावाहनम् ॥ ॐ एह्येहि विप्रेन्द्र ! पितामहेश! हंसाऽधिरूढ त्रिदशैकवन्द्य । श्वेतोत्पलाभास कुशाम्बुहस्त, गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ ब्रह्मयज्ञानम्० ॥ ॐ भूर्भुवः स्वः, ब्रह्मदैवतसंज्ञक स्तम्भेहाग-

* ध्यान रहे कि यहाँ स्तम्भ पूजन का संकल्प विवाह परक ही लिखा गया है, अतएव-पाठक स्वयं चूडोपनयनादि अन्य संस्कारों में तत्सम्बन्धी संकल्प लगाकर पूजन करें ॥

च्छेति—सस्थूणनागमातृकाय ब्रह्मदैवतसंज्ञकस्तम्भाय नमः ॥ पाद्यादिभिः सम्पूज्य, प्रार्थयेत् ॥ ॐ कृष्णाम्बराजिनधर, पद्मासन चतुर्मुख ॥ जटाधर जगद्धातः, प्रसीद कमलोद्भव ॥१॥ ॐ सावित्र्यै नमः ॥ ॐ ब्राह्मयै नमः ॥ ॐ गङ्गायै नमः ॥ इति—सम्पूज्य, स्तम्भमालभ्य ॥ ॐ ऊर्द्ध्व ऽऊषु-णऽ ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो व्वाजस्य सनिता यदञ्जिभिर्व्वाघद्भिर्व्विह्वयामहे ॥ [स्तम्भशिरसि] ॐ नागमात्रे नमः ॥ सम्पूज्य, शाखां बद्ध्वा ॥ ॐ आयङ्गौः पृश्निरक्रमीदसदन्नमातरम्पुरः । पितरञ्च प्रयन्त्स्वः ॥ क्षमापनम् ॥ ॐ यतो यतः समीहसे ततो नोऽअभयङ् कुरु । शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ॥

---

[पञ्चोपचाराः]-गन्धपुष्पेधूपदीपौ, नैवेद्य-इति पञ्चकम् । [षोडशोपचाराः] आवाहनासनें पाद्यमर्घमाऽऽचमनीयकम् । स्नानं वस्त्रोपवीतञ्च गन्धमाल्यान्यनुक्रमात् ॥१॥ धूपं दीपञ्च नैवेद्यं, ताम्बूलञ्च प्रदक्षिणा पुष्पाञ्जलिरिति-प्रोक्ता, उपचारास्तु षोडश ॥२॥ इति ॥

ॐ वनस्पतिसमुद्भूतो, निर्मितो विश्वकर्मणा ॥ स्थिरो भवाऽत्ररक्षार्थं, यावत्कार्यं समाप्यते ॥ एवं सर्वत्रबोध्यम् ॥१॥ (अन्तराग्नेये)—इदं विष्णुरिति—मेधातिथिर्ऋषिर्गायत्रीछन्दो विष्णुर्देवता, विष्णवावाहने-विनियोगः ॥ आवाहनम् ॥ ॐ एह्येहि नारायण दिव्यमूर्ते, सर्वामरैरर्चितपादपद्म ॥ शुभाऽशुभानन्द शुचामधीश, गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ इदं विष्णुर्विचक्रमे० । ॐ भूर्भुवः स्वः, विष्णो ! इहागच्छेति-ॐ विष्णवे नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ ॐ देवदेव जगन्नाथ ! विष्णो यज्ञपते विभो ॥ पाहि दुःखाम्बुधेरस्मान् भक्तानुग्रहकारक ॥ ॐ लक्ष्म्यै नमः॥ ॐ नन्दायै नमः ॥ ॐ वैष्णव्यै नमः ॥ ॐ आदित्यायै नमः ॥ सम्पूज्य ॥ ॐ ऊर्द्ध्वं इत्यादिशेषं पूर्ववद् ज्ञेयम् ॥२॥ (अन्तेनैऋत्ये)—ॐ नमस्त-इति परमेष्ठीऋषिर्गाय-

त्रीछन्दो, रुद्रो—देवता, रुद्रावाहने-वि० ॥ आवाहनम् ॥ ॐ एह्येहि गौरीश पिनाकपाणे, शशाङ्कमौले वृषभादिरूढ । देवाधिदेवेश महेश नित्यं, गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ नमस्ते रुद्र मन्यव० ॥ ॐ भूर्भुवः स्वः-रुद्रेहागच्छेति ॥ ॐ रुद्राय नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ ॐ पञ्चवक्त्र वृषारूढ, त्रिलोचन ! सदाशिव ! । चन्द्रमौले ! महादेव, मम स्वस्तिकरो भव ॥ ॐ माहेश्वर्यै नमः । ॐ गौर्यै नमः ॥ ॐ शोभनायै नमः ॥ इति सम्पूज्य, ॐ ऊर्द्ध्व० इत्यादि-शेषं पूर्ववद् ज्ञेयम् ॥३॥ (अन्तेवायव्ये)-ॐ त्रातारमिति-गर्गऋषिस्त्रिष्टुप्छन्दः, इन्द्रो देवतेन्द्राऽऽवाहने--वि० ॥ आवाहनम् ॥ ॐ एह्येहि वृत्रघ्न गजाधिरूढ, सहस्रनेत्र त्रिदशैकवन्द्य । शचीपते ! शक्र ! सुरेश ! नित्यं, गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ त्रातारमिन्द्रमविता-

रमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम् । ह्वयामि-शक्क्रम्पुरुहूतमिन्द्र ꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ ॐ भूर्भुवः स्वः, भो इन्द्रेहागच्छेति० ॐ इन्द्राय नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ ॐ देवराज गजारूढ, पुरन्दर शतक्रतो । वज्रहस्तु महाबाहो, वाञ्छितार्थप्रदो भव ॥ ततः ॥ ॐ इन्द्राण्यै नमः ॥ ॐ आनन्दायै नमः ॥ ॐ विभूत्यै नमः ॥ इति सम्पूज्य, ॐ ऊर्द्ध्वं० इत्यादिशेषं पूर्ववद् ज्ञेयम् ॥४॥ [बहिरीशाने] ॐ चित्रमितिकुत्सऋषिर्विराट्छन्दः, सूर्य्योदेवता, सूर्यावाहने–वि० ॥ आवाहनम् ॥ ॐ एह्येहि सप्ताश्व सहस्रभानो, सिन्दूरवर्ण प्रतिमावभास । छायापते ! सूर्य ! दिनेश ! नित्यं गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्नेः । आप्प्राद्यावा पृथिवीऽअन्तरिक्ष ꣳ सूर्य्यऽआत्मा जगतस्तस्थु षश्चच-

ॐ भूर्भुवः स्वः, सूर्येहागच्छेति ॥ ॐ सूर्याय नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ पद्महस्त रथारूढ, पद्मासन सुमङ्गल । क्षमां कुरु दयालो ! त्वं, ग्रहराज नमोऽस्तुते ॥ ॐ सावित्र्यै नमः ॥ ॐ मङ्गलायै नमः ॥ ॐ भूत्यै नमः ॥ इति-सम्पूज्य ऊर्ध्वं०-इत्यादि शेषं पूर्ववद् ज्ञेयम् ॥५॥ (ईशानपूर्वयोर्मध्ये) ॐ गणानान्त्वेति—प्रजापतिर्ऋषिर्यजुश्छन्दो, गणपतिर्देवता, गणपत्याऽऽवाहने-विनियोगः ॥ आवाहनम् ॥ ॐ एह्येहि हेरम्ब ! महेशपुत्र, समस्त—विघ्नौघविनाशदक्ष । माङ्गल्यपूजा-प्रथम—प्रधान, गृहाण पूजां भगवन्न मस्ते ॥ ऋक् ॥ ॐ गणानान्त्वा० ॥ ॐ भूर्भुवः स्वः, भो गणपते ! इहाऽऽगच्छेति-ॐगण-पतये नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ लम्बोदर नमस्तुभ्यं, सततं मोदकप्रिय । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ॐ विघ्नहारिण्यै नमः ॥ ॐ जयायै नमः ॥ ॐ सर-

स्वस्त्यै नमः ॥ इति सम्पूज्य, ॐ ऊर्ध्वं० इत्यादि-शेषं पूर्ववत् ज्ञेयम् ॥६॥ (पूर्वाग्नेययोर्मध्ये) ॐ यमाय त्वेति-दध्यङ्ङाथर्वण ऋषिर्यजुश्छन्दः यमो देवता यमाऽऽवाहने-विनियोगः ॥ आवाहनम् ॥ ॐ एह्येहि वैवस्वत ! धर्मराज ! सर्वामरैरर्चित धर्ममूर्त्ते । विशालवक्षस्थल रुद्ररूप, गृहाण पूजां भगवन्नमस्ते ॥ ॐ यमाय त्वा मखाय त्वा, सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वा नक्तु पृथिव्याः सꣳस्पृशस्पाहि । अर्चिरसि शोचिरसि तपोसि ॥ ॐ भूर्भुवः स्वः, भो यमेहाऽऽगच्छ, इह तिष्ठ ॥ ॐ यमाय नमः ॥ इति सम्पूज्य प्रार्थयेत् ॥ ॐ धर्मराज महाकाय, दण्ड हस्त वरप्रद । रक्तेक्षण महाबाहो ! पाहि यज्ञं नमोऽस्तु ते । ॐ पूर्व-सन्ध्यायै नमः ॥ ॐ आञ्जन्यै नमः ॥ ॐ क्रूरायैनमः ॥ ॐ नियन्त्र्यै नमः ॥ इति सम्पूज्य, ॐ ऊर्द्ध्व० -इत्यादि

शेषं पूर्ववद् ज्ञेयम् ।।७।। (बाह्ये आग्नेये) ॐ नमोऽस्त्वति मन्त्रस्य देवश्रवा ऋषि-स्त्रिष्टुप्छन्दो, नागराजो-देवता, नागराजा-ऽऽवाहने-विनियोगः ।। ध्यानम्-ॐ एह्येहि-नागेन्द्र धराधरेन्द्र !, सर्वामरैर्वन्दितपाद-पद्म ।। नाना फणामण्डलराजमान, गृहाणपूजां भगवन्नमस्ते ।। ऋक् ।। ॐ नमोस्तु सर्प्पे-भ्यो ये के च पृथिवी मनु । ये ऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नमः ।। ॐ भूर्भुवः स्वः नागराजेहागच्छ, इह-तिष्ठ ॐ नागराजाय नमः ।। सम्पूज्य प्रार्थयेत् ।। ॐ आशीविष समोपेत, नागकन्या विराजित । आगच्छ नागराजेन्द्र, फणासप्तकमण्डित । ॐ अध-रायै नमः । ॐ मध्यम-सन्ध्यायै नमः ।। ॐ पद्मायै नमः ।। ॐ महा पद्मायै नमः ।। इति सम्पूज्य, ॐ ऊर्द्धव०-इत्यादि शेषं पूर्ववद् ज्ञेयम् ।।८।। (अग्नि दक्षिणयोर्म-ध्ये) ॐ यदक्रन्द-इति भार्गवऋषिस्त्रि-

ष्टुप्छन्दः, स्कन्दो-देवता, स्कन्दाऽऽवाहने विनियोगः। ॐ एह्येहि गौरीसुत देवदेव! षट्कृत्तिकारक्षित देहयेष्ट मयूरवाह प्रणतार्त्तिहारिन्, गृहाण पूजां भगवन्नमस्ते। ॥ ऋक् ॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यम्महि जातन्ते ऽ अर्व्वन् ॥ ॐ भूर्भुवः स्वः, भोस्कन्द! इहागच्छ, इह-तिष्ठ ॥ ॐ स्कन्दाय नमः सम्पूज्य, प्रार्थयेत् ॥ ॐ मयूरवाहन स्कन्द, गौरीसुत षडानन। कार्त्तिकेय ! महाबाहो ! दयां कुरु दयानिधे ॥ ॐ पश्चिमसन्ध्यायै नमः॥ ॐ जयायै नमः॥ ॐ विजयायै नमः ॥ इति सम्पूज्य, ॐ उद्बुध्य० इत्यादि शेषं पूर्ववद् ज्ञेयम् ॥८॥ (दक्षिणनैर्ऋत्यमध्ये) ॐ वायुरिति—वसिष्ठ—ऋषिस्त्रिष्टुप्छन्दो, वायुर्देवता, वाय्वावाहने-विनियोगः॥ अथाऽऽवाहनम् ॥ ॐ

एह्येहि वायो ! मम रक्षणाय, मृगाऽधिरूढ
स्त्वधिसिद्धसङ्घैः । प्राणाधिप त्राणकर
प्रधान, गृहाण पूजां भगवन्नमस्ते ॥ ऋक्॥
ॐ व्वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा
यज्ञम् । शिवो नियुद्भिः शिवाभिः ॥ ॐ
भूर्भुवः स्वः, वायो ! इहागच्छ, इह तिष्ठ ॥
ॐ वायवे नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ ॐ
नमो धरणिपृष्ठस्थ–ध्वजधारिन् समीरण ।
पाहि यज्ञमिमं देव ! प्रसन्नो भव मे सदा ॥
ॐ तीव्रायै नमः ॥ ॐ गायत्र्यै नमः ॥ ॐ
वायव्यै नमः ॥ सम्पूज्य ॥ ॐ ऊर्ध्वं० इत्या-
दि–शेषं पूर्ववद् ज्ञेयम् ॥१०॥ (नैऋर्त्ये)
ॐ सोममितिबन्धुऋर्षिर्गायत्रीछन्दः, सो-
मो–देवता, सोमावाहने–विनियोगः ॥
आवाहनम् ॥ ॐ एह्येहि सोमाध्वरदेव—
देव !, विधत्स्व रक्षां भगणेन साधम् ॥ योग-
स्य सर्वौषधिपितृयुक्त, गृहाण पूजां भगवन्न-
मस्ते ॥ ऋक् ॥ ॐ सोम ँ राजानमवसे

ऽग्निमन्वारभामहे। आदित्यान् विष्णु सूर्यं ब्रह्माणञ्च बृहस्पति ॰ स्वाहा॥ ॐ भूर्भुवः स्वः भो सोम ! इहागच्छ, इह-तिष्ठ॥ ॐ सोमाय नमः॥ सम्पूज्य, प्रार्थयेत्॥ ॐ क्षीरार्णवसमुद्भूत, द्विजराज ! सुधाकर॥ सोम त्वं सौम्यभावेन, ग्रहपीडां निराकुरु॥ ॐ सावित्र्यै नमः॥ ॐ अमृतकलायै नमः॥ ॐ विजयायै नमः॥ इति सम्पूज्य, ऊर्ध्वं॰ इत्यादि-शेषं पूर्ववद् ज्ञेयम्।११। (पश्चिमनैर्ऋत्यमध्ये) ॐ इमम्मे वरुणेति—वत्सऋषिर्बृहतीछन्दो, वरुणो—देवता, वरुणाऽऽवाहने-विनियोगः॥ आवाहनम्॥ ॐ एह्येहि यादोगणवारिधीश, पर्जन्यदेवाप्सरसां गणेन। विद्याधरेन्द्राऽमरगीयमान, गृहाण पूजां भगवन्नमस्ते॥ ऋक्॥ ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युरा चके॥ ॐ भूर्भुवः स्वः, भो वरुण ! इहागच्छ, इह तिष्ठ-ॐ वरुणाय

नमः ॥ इति सम्पूज्य, प्रार्थयेत् ॥ ॐ शङ्ख-स्फटिकवर्णाभ, श्वेतहाराम्बरावृत । पाशहस्त महाबाहो, वरुण त्वं दयां कुरु ॥ ॐ वारुण्यै नमः ॥ ॐ बार्हस्पत्यै नमः । ॐ पाशधारिण्यै नमः ॥ इति सम्पूज्य ऊर्ध्व० इत्यादिशेषं पूर्ववद् ज्ञेयम् ॥१२॥ (पश्चिमवायव्यमध्ये) ॐ सुगाव इति-वसिष्ठ ऋषिर्गायत्री-छन्दो, वसुर्देवता, वस्वावाहने-विनियोगः ॥ आवाहनम् ॥ ॐ एह्येहि देवेश्वर दिव्यदेह !, वसो प्रसन्ना-त्मद्दगष्टमूर्ते । ममास्य यागस्य सुरक्षणार्थं, गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ सुगावो देवाः सदना अकर्म्म य आजग्मेद ँ सवनञ्जुषाणाः । भरमाणाव्वह माना-हवी ँ ष्यस्मे धत्त व्वसवो व्वसूनि-स्वाहा ॥ ॐ भूर्भुवः स्वः, वसो ! इहागच्छेति-ॐ वसवे नमः ॥ सम्पूज्य, प्रार्थयेत् । ॐ दिव्यवस्त्वाष्टमूर्त्ते त्वं, दिव्यदेहधर प्रभो ।

पाहि यज्ञमिमं सर्वं, वरदं त्वां नमाम्यहम्॥ ॐ विनतायै नमः ॥ ॐ गरिमायै नमः ॥ ॐ सम्भूत्यै नमः ॥ इति-संपूज्य, ऊर्ध्वं॰ इत्यादि शेषं पूर्ववद् ज्ञेयम् ॥१३॥ (वायव्ये)-ॐ सोमोधेनुमिति-गोतमऋषिस्त्रिष्टुप्छन्दः, धनदो-देवता, धनदावाहने-विनियोगः ॥ आवाहनम् ॥ ॐ एह्येहि रक्षोगणनायक त्वं, विशालवेतालपिशाचसङ्घैः ॥ ममाऽध्वरं पाहि कुवेर देव !, गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ सोमो धेनु ँ सोमो अर्व्वन्तमाशु सोमो व्वीरं कर्म्मण्यं ददाति सादन्यं विदथ्य ँ सभेयं पितृश्रवणं य्यो ददाशदस्म्मै ॥ ॐ भूर्भुवः स्वः, भो धनदेहागच्छेति-ॐ धनदाय नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ ॐ दिव्यदेह धनाध्यक्ष, पीतहाराम्बरावृत । उत्तरेश ! महाबाहो, वाञ्छितार्थं प्रदो भव ॥ ॐ आदित्यै नमः ॥ ॐ सिनीवा-

ल्यै नमः ॥ॐ लघिमायै नमः ॥ इति–
सम्पूज्य। ॐ ऊर्ध्व० इत्यादि–सर्वं पूर्ववद्-
ज्ञेयम् ॥१४॥ ( उत्तरवायव्यमध्ये ) ॐ
बृहस्पत-इति-गृत्समद ऋषिस्त्रिष्टुप्छन्दो,
बृहस्पतिर्देवता, बृहस्पत्याऽऽवाहने विनि-
योगः ॥ आवाहनम् ॥ ॐ एह्येहि देवेन्द्र
गुरो मखेश ! बृहस्पते यज्ञपते सुयागे।
रक्षार्थमत्रोपविशानुकम्पिन्, गृहाण पूजां
भगवन्नमस्ते ॥ ऋक् ॥ ॐ बृहस्पते ऽअ-
तियदर्य्योऽ अर्हा द्युमद्विभाति क्रतुमज्ज-
नेषु। यद्दीदयच्छवस ऽऋत प्प्रजात-तद-
स्म्मासु द्रविणं न्धेहि चित्रम् ॥ ॐ भूर्भुवः
स्वः, भो बृहस्पते ! इहागच्छेति० ॐ बृह-
स्पतये नमः ॥ इति–सम्पूज्य, प्रार्थयेत् ॥
ॐ देवाचार्य्य यथा शक्त्या, पूजितोऽसि
मया मुदा। क्रूरग्रहोपशान्ति त्वं, कुरु नित्यं
नमोऽस्तु ते ॥ ॐ पौर्णमास्यै नमः ॥ ॐ
देवमात्रे नमः ॥ ॐ सन्तत्यै नमः ॥ संपूज्य,

ॐ ऊर्ध्व० इत्यादि—शेषं पूर्ववद् ज्ञेयम् ॥१५॥ ( उत्तरेशानयोर्मध्ये ) ॐ विश्वकर्मन्निति—शासऋषिस्त्रिष्टुप्छन्दो, विश्वकर्मादेवता, विश्वकर्माऽऽवाहने—विनियोगः ॥ अथाऽऽवाहनम् ॥ ॐ एह्येहि शिल्पीश्वर विश्वकर्मन् ! मूर्त्यादिनिर्माणकरैकमुख्य । दोर्दण्डसंसाधितसर्वशिल्प, गृहाण पूजां भगवन्नमस्ते ॥ ऋक् ॥ ॐ व्विश्वकर्मन्हविषा व्वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मै व्विशः समनमन्तपूर्वीरयमुग्रो व्विहव्योयथासत् ॥ ॐ भूर्भुवः स्वः भो विश्वकर्मन् ! इहागच्छेति—ॐ विश्वकर्मणे नमः ॥ सम्पूज्य, प्रार्थयेत् ॥ ॐ विश्वकर्मन् ! प्रसीद त्वं, शिल्पशास्त्रविशारद । दण्डपाणे महाबाहो,तेजोमूर्तिधर प्रभो ॥ ॐ वास्तुदेवतायै—नमः ॥ ॐ वैश्वकर्मण्यै-नमः ॥ ॐ शारदायैः-नमः ॥ संम्पूज्य, ॐ ऊर्ध्व० इत्यादि—शेषं पूर्ववद्

ज्ञेयम् ॥ १६ ॥ प्रार्थयेत् ॥ ॐ जितं ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन ! । नमस्तेऽस्तु हृषीकेश !, महापुरुष पूर्वज ॥

ततो दधिमाषभक्तबलिदानं दद्यात् ॥

बहिःपूर्वे ॥ ॐ त्रातारमिति–गर्गऋषिस्त्रिष्टुप्छन्दो,इन्द्रो-देवता, सदीपदधिमाषभक्तबलिदाने-विनियोगः।ऋक्। त्रातारमिन्द्रमवितारमिन्द्र ँ हवे हवे सुहव ँ शूरमिन्द्रम् । ह्वयामि शक्रम्पुरुहूतमिन्द्र ँ स्वस्ति नो मघवा धात्विन्द्रः ॥ ॐ भूर्भुवः स्वः, भो इन्द्रेहागच्छेति–ॐ इन्द्राय नमः । सदीपदधिमाषभक्तबलये नमः ॥

सम्पूज्य जलं तत्र त्यजेत् ॥

दधिमाषौदनैर्युक्तं, सदीपं बलिमुत्तमम्। सर्वविघ्नप्रणाशाय, गृहाणेन्द्र वर प्रद ॥ मण्डले सम्प्रवक्ष्यामि, मया भक्त्या निवेदितम् । इदमर्घ्यमिदं पाद्यं, दीपोऽयं प्रतिगृह्यताम्॥ १॥इति [आग्नेये] ॐ त्वन्नोऽअग्ने० इति-हिरण्यस्तूप-ऋषिस्त्रिष्टुप्छ–

न्दोऽग्निर्देवता, सदीपदधिमाषभक्तबलिदाने—विनियोगः। ऋक्। ॐ त्वन्नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽ अव यासिसीष्ठाः। यजिष्ठ्ठो व्वह्निनतमः शोशुचानो व्विश्श्वा द्वेषा ँ सि प्रमुमुग्ध्यस्म्मत्॥ ॐ भूर्भुवः स्वः अग्ने! इहागच्छेति-ॐ अग्नये नमः। सदीपदधिमाषभक्तबलये नमः॥ सम्पूज्य, जलं तत्र संत्यजेत्॥ दधिमाषौदनैर्युक्तं, सदीपं बलिमुत्तमम्। गृहाणाग्ने महाबाहो, रक्षो विघ्नं प्रणाशय॥ मण्डलेति पूर्ववत्॥२॥ (दक्षिणे) ॐ असीतिजमदग्निऋर्षिस्त्रिष्टुप्छन्दो, यमो-देवता, सदीपदधिमाषभक्तबलिदाने-विनियोगः॥ ऋक्॥ ॐ असि यमो ऽअस्यादित्यो ऽ अर्व्वन्नसि त्रितो गुह्येन व्व्रतेन। असि सोमेन समया विपृक्त ऽआहुस्ते त्रीणि दिवि बन्धनानि॥ ॐ भूर्भुवः स्वः, यमेहागच्छेति—ॐ यमाय नमः॥ सदीपदधिमाषभक्तबलये

नमः ।। सम्पूज्य,जलन्तत्र संत्यजेत् ।। दधि-
माषौदनैर्युक्तं सदीपं बलिमुत्तमम् ।। यम-
राज गृहाण त्वं, सर्वदोषं निवारय ।। मण्ड-
लेतिपूर्ववत् ।।३।। (नैर्ऋत्ये) असुन्वन्तमि-
तिविवस्वानृषिस्त्रिष्टुप्छन्दो, निर्ऋतिर्दे-
वता, सदीपदधिमाषभक्तबलिदाने-विनि-
योगः ।। ऋक् ।। ॐ असुन्वन्तमयजमान-
मिच्छस्तेनस्येत्यामन्विहितस्करस्य । अन्य-
मस्मदिच्छ सा त ऽ इत्या नमो देवि
निर्ऋते तुभ्य मस्तु ।। ॐ भूर्भुवः स्वः,भो
निर्ऋते!इहागच्छेति-ॐ निर्ऋतये नमः ।।
सदीपदधिमाषभक्तबलये नमः ।। सम्पूज्य,
जलं तत्र त्यजेत् । दधिमाषौदनैर्युक्तं,सदीपं
बलिमुत्तमम् गृहाण निर्ऋते देव, सर्वान्
दोषान्निवारय ।। मण्डलेति-पूर्ववत् ।।४।।
(पश्चिमे)-ॐ तत्वायामिति-शुनः शेप-
ऋषिस्त्रिष्टुप्छन्दो, वरुणो-देवता, सदीपद-
धिमाषभक्तबलिदाने-विनियोगः ।। ऋक् ।।

ॐ तत्त्वा यामि ब्ब्रह्मणा व्वन्दमानस्तदा-
शास्ते यजमानो हविर्ब्भिः । अहेडमानो
व्वरुणेह बोद्ध्युरुश ँ स मा नऽ आयुः प्प्र-
मोषीः ।। ॐ भूर्भुवः स्वः वरुणेहागच्छेति-
ॐ वरुणाय नमः । सदीपदधिमाषभक्त-
वलये नमः । सम्पूज्य जलं तत्र संत्यजेत् ॥
दधिमाषौदनैर्युक्तं, सदीपं बलिमुत्तमम् ।
गृहाण देव वरुण, रक्षो विघ्नं प्रणाशय ॥
मण्डलेति पूर्ववत् ।।५।। [वायव्ये] आनो-
नियुद्भिरिति-वसिष्ठऋषिस्त्रिष्टुप्छन्दो, वा-
युर्देवता-सदीपदधिमाषभक्तबलिदाने-विनि-
योगः ।। ऋक्।। ॐ आनो नियुद्भिः शति-
नीभिरध्वर ँ सहस्रिणीभिरुपयाहि यज्ञम्।
व्वायो ऽअस्मिन्तसवने मादयस्वयूयं पात
स्वस्तिभिः सदा नः ।। ॐ भूर्भुवः स्वः
वायो ! इहागच्छेति–ॐ वायवे नमः ॥
सदीपदधिमाषभक्तबलये नमः ।। सम्पूज्य
जलं तत्र त्यजेत् ।। दधिमाषौदनैर्युक्तं,

सदीपं बलिमुत्तमम् । गृहाणवायो ! देवेश!, सर्वव्याधिक्षयं कुरु ॥ मण्डलेति पूर्ववत् ॥६॥ (उत्तरे) वयमिति-बंधुऋर्षिस्त्रिष्टुप्छन्दः सोमो देवता, सदीपदधिमाषभक्तबलिदाने–विनियोगः ॥ऋक्॥ ॐ व्वय ँ सोम व्व्रते तव मनस्तनूषु बिब्भ्रतः । प्रजावन्तः सचेमहि ॥ ॐ भूर्भुवः स्वः, सोमेहागच्छेति–ॐ सोमाय नमः ॥सदीपदधिमाषभक्तबलये नमः ॥ इति सम्पूज्य, जलं त्यजेत् ॥ दधिमाषौदनैर्युक्तं, सदीपं बलिमुत्तमम् गृहाण । सोम ऋक्षेश,मम शान्तिकरो भव॥मण्डलेति पूर्ववत्॥७॥ [ईशाने] ईशावास्यमिति– गौतमऋषिर्जगतीछन्द,ईशानो—देवता सदीपदधिमाषभक्तबलिदाने–विनियोगः ॥ ऋक् ॥ ॐ ईशावास्यमिद ँ सर्वं यत्किञ्चजज्जगत्याञ्जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ ॐ भूर्भुवः स्वः, ईशानेहागच्छे-

ति-ॐ ईशानाय नमः ॥ सदीपदधिमाषभक्त-बलये नमः ॥ सम्पूज्य, जलं तत्र त्यजेत् ॥
दधिमाषोदनैर्युक्तं, सदीपं बलिमुत्तमम् ।
गृहाणेशान सर्वज्ञ !, सर्वशत्रुक्षयं कुरु ॥
मण्डलेति पूर्ववत् । (ईशानपूर्वयोर्मध्ये-ऊर्ध्वायाम्) ॐ ब्रह्म यज्ञानमितिगोतम-ऋषिस्त्रिष्टुप्छन्दो, ब्रह्मा-देवता, सदीप-दधिमाषभक्तबलिदाने—विनियोगः॥ ऋक्॥
ॐ ब्रह्म यज्ञानम्प्रथमम्पुरस्ताद्वि सीमतः सुरुचो व्वेन ऽआवः । सबुध्न्या ऽउपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ॐ भूर्भुवः स्वः, ब्रह्मन्निहागच्छेति-ॐ ब्रह्मणे नमः ॥ सदीपदधिमाष-भक्तबलये नमः ॥
सम्पूज्य, जलं तत्र त्यजेत् ॥
दधिमाषौदनैर्युक्तं, सदीपं बलिमुत्तमम् ।
गृहाण ब्रह्मन् देवेश, सर्वसौख्यं विवर्धय ॥
मण्डलेति पूर्ववत् ॥ ९ ॥ (निर्ऋति पश्चि-

मयोर्मध्येऽधःस्थायाम्)-ॐ आयं गौरिति-सूर्यऋषिर्गायत्रीछन्दोऽनन्तो देवता, सदीपदधिमाषभक्तबलिदाने-विनियोगः । ऋक् । ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः। पितरञ्च प्रयन्त्स्वः ॥ ॐ भूर्भुवः स्वः-अनन्तेहागच्छेति-ॐ अनन्ताय नमः ॥ सदीपदधिमाषभक्तबलये नमः । संपूज्य, जलं तत्र त्यजेत् ॥ दधिमाषौदनैर्युक्तं, सदीपं बलिमुत्तमम् । गृहाणानन्त नागेन्द्र ! सर्वान् विघ्नान् प्रणाशय ॥ मण्डलेति पूर्ववत् ॥१०॥ (मण्डपाद्-बहिर्दक्षिणे)-

सदीपदधिमाषभक्तसिन्दूरकज्जलरक्तपुष्पपक्वान्नकुकुम-वलि सोपायनं निधाय ॥

ॐ न हि स्पशमिति-विश्वामित्रऋषिस्त्रिष्टुप्छन्दः, क्षेत्रपालो-देवता, क्षेत्रपालबलिदाने-विनियोगः ॥ ऋक् ॥ ॐ न हि स्पशमविदन्न न्यमस्माद्वैश्वानरात्पुर-ऽएतारमग्नेः । एमेनमवृधन्नमृता ऽअमर्त्यं वैश्वा-

नरङ्क्षैत्रजित्याय देवाः ॥ ॐ भूर्भुवः स्वः, क्षेत्रपालेहागच्छेति- ॐ क्षेत्रपालाय नमः ॥ बलये नमः ॥ सम्पूज्य, जलं तत्र त्यजेत् ॥ दधिमाषौदनैर्युक्तं, समीपं बलिमुत्तमम् । गृहाण त्वं क्षेत्रपाल !, रक्षोविघ्नं प्रणाशय ।

इति ततो दुर्ब्राह्मणं सम्पूज्य, तस्मै बलिं दद्यात् । सम्प्रार्थयेत् ।

ॐ भ्राजद्वक्त्रजटाधरं त्रिनयनं नीलाञ्जनादिप्रभं, दोर्दण्डान्तगदाकपालमरुणं स्रग्गन्धवस्त्राऽऽवृतम् ॥ घण्टाघुर्घुरमेखलाध्वनिमिलद्धुङ्कारभीमं प्रभुम्, वन्दे संहितसर्पकुण्डलधरं श्री क्षेत्रपालं सदा ॥ नमस्कारः ॥ त्रैलोक्ये यानि भूतानि, स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्धं, रक्षां कुर्वन्तु तानि मे ॥ इति ॥

## ❀ अथ विवाहसंस्कारपद्धतिः ❀

तत्रपूर्वं कन्यावरयोरायुषो विचारः ॥ अखिलधर्मशास्त्रानुमत्या ब्रह्मचर्याश्रमे वेदादिविद्याग्रहणानन्तरं पुरुषाणां विवाहः

कार्य्यं इति । दीर्घकालावधि ब्रह्मचर्यधारणं कलौ निषिद्धमतो मानवधर्मशास्त्रोक्तं ग्राह्यम् । तथा हि द्विजपुरुषाणां सप्तदश वर्षादारभ्य पञ्चविंशतिवर्षावधि विवाहकालः । बालिकानाञ्च दशद्वादशवर्षपरिमितमेवावधिः । तथा हि "वसिष्ठस्मृतौ"-प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता । ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥१॥ पितुः प्रमादात्तु यदीह कन्या, वयः प्रमाणं समतीत्य दीयते ॥ सा हन्ति-दातारमुदीक्षमाणा, कालातिरिक्ता गुरुदक्षिणेव ॥२॥ यावच्च कन्यामृतवः स्पृशन्ति, तुल्यैः सकामामभियाच्यमानाम् । भ्रूणानि तावन्ति हतानि ताभ्यां, मातापितृभ्यामिति धर्मवादः ॥३॥ अ० १७ ।

---

* विवाह प्रथा के भेद *

"ब्राह्मो दैवस्तथैवार्षः, प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव, पैशाचश्चाऽष्टमोऽधमः ॥"

## अथ कन्याद्वारे वरयात्राप्रवेशे प्रश्नोत्तराष्टकम्

**कन्यापक्षीयाः—**

शिवो गणेशः किमु विष्णुदेवः, समागतः किं भुवनैकवन्द्यः।
यो वा भवेत् स्वागतमत्र गेहे नतिस्तथा नः सगणस्य तेऽस्तु ॥१॥

**वरपक्षीयाः—**

नाऽहं शिवः सोऽपि शिवं सदावः नान्यो नरः केवलकौतुकीयः।
वरोऽस्मि नारायणरूपनामा, द्वारागतस्तेऽद्य गणैः स्वसार्धम् ॥२॥

**कन्यापक्षीयाः—**

कुतः कथं विष्णुजगज्जयिष्णोः, किन्ते मदभ्यागमकारणञ्च।
केमी त्वदीया हि गणाः समस्ता दिष्ट्यागतोऽत्र हि तथेति मे त्वम् ॥३॥

**वरपक्षीयाः—**

श्रुतं मया विप्रमुखाम्बुजाद्यद् दाता भवानेक इहावतीर्णः।
क्षीरोदनाम्नैव विचिन्त्य चेतः, स्त्वनाकपूर्वं पुरतः समेतः ॥४॥

**कन्यापक्षीयाः—**

अहोऽतिधन्याः कृतपुण्यकाः स्मो, येषां स गेहे नयगाऽभिरामः।
रामः स्वयं राजति याचते च, रामोऽद्य किं ते वयमागताय ॥५॥

**वरपक्षीयाः—**

वाचा प्रदत्ता प्रहितं यदर्थं, मुहूर्तपत्रं किल तत् स्मर त्वम्।
तां त्वच्छ्रियं लब्धुमिहागताः स्मस्त्वद् द्वारदेशे सगणैस्तदित्थम् ॥६॥

**कन्यापक्षीयाः—**

विभाति किं वाद्यमुदः छटापरा सुधांशुवर्णस्य तथैव किं कला।
मनोरथस्योत्परमा कृपा प्रभो ! सुता-प्रदानाऽवसरो वृतो यतः ॥७॥

**वरपक्षीयाः—**

वरश्रिया सर्वगुणैकसंश्रितां श्रियं सुतां सम्प्रति, विष्णुरूपिणे।
वराय दत्वैव वितथ्यवाचभाग, विवाहसंस्कारविधानतः शुभाम् ॥८॥

ततो दाता ददानीत्युक्त्वोपवेशयति ॥

---

कुछ जगह जब वरयात्रा कन्या के द्वार पर आती है तो कहीं २ इस तरह-प्रश्नोत्तार होते हैं। इस प्रश्नोत्तरी के अनन्तर आदर से

## विवाह संस्कार-विधिः-

तत्र धूल्यर्घ-विधिः-कन्यापिता स्नातः शुचिः शुल्काम्बरधरः कृतनित्यक्रियः-आचार्यं सम्पूज्य वृणुयात् ॥

**ॐ अद्येत्यादि० ममाऽस्याः कन्यायाः करिष्यमाणविवाहसंस्कारकर्म्मणि-एभिर्गन्धाऽक्षतपुष्पपूगीफलद्रव्ययज्ञोपवीतपुष्पमालावासोऽलङ्करणादिभिश्च—आचार्य्यकर्म—कर्तुमाचार्यत्वेन त्वामहं वृणे ॥ 'वृतोऽस्मीति'—प्रतिवचनम् ॥**

ततः सपुष्पहस्तः कन्यापिता तं प्रार्थयेत् ॥

---

गणेश-पूजन करना भी संस्कार-सिद्ध्यर्थ श्रेय है। क्योंकि-सांख्योक्त २४ स्थूल-तत्वों में व्यापक जगदीश को गणेश कहते हैं। जो कि-विराट् नाम से वर्णित है। मुक्ति को कुतरने वाली विक्षेप या आवरण शक्ति रूप मूषक गणेश का वाहन है। गणेश की उपासना हमको यह उपदेश देती है, कि स्थूल तत्वों में व्यापक-परमात्मा का दर्शन विक्षेप और आवरण-शक्ति को नीचे दबाने से होता है। अतः-प्रत्येक-कार्यके आदि में गणेश-पूजन की आज्ञा उपदेश देती है कि मनुष्य जन्म की सफलता तभी है, जब कि वह जन्म लेकर त्रिविध-तापों से मुक्त होकर आत्मा के आनन्द स्वरूप मुक्ति का दर्शन करे। वह दर्शन यम-नियमादि आठ-कक्षाओं को उत्तीर्ण कर स्थूल, सूक्ष्म और कारण-प्रकृति में व्यापक विराट् हिरण्यगर्भ और ईश्वर में क्रमशः होकर शुद्ध-ब्रह्म में होता है, अन्यथा, नहीं, । अतएव गणेश [विराटरूप] पूजन आदि में रक्खा है। यही रहस्य विद्वानों ने बताया है।

"आचार्यस्तु यथा स्वर्गे, शक्रादीनां बृहस्पतिः। तथा त्वं भगवन् चात्र, आचार्यो भव सुव्रत" ॥१॥ यथा चतुर्मुखो ब्रह्मा० ॥२॥ "अस्य यज्ञस्य निष्पत्यै, भवन्तोऽभ्यर्थिता मया ॥ सुप्रसन्नैर्हि कर्तव्यं शान्तिकं विधिपूर्वकम् ॥३॥ इति-सम्प्रार्थ्य, अस्मिन् कन्याविवाहकर्मणि त्वं मे आचार्यो भवेति-ब्रूयात्। तत आचार्योऽ'हं भवानि'-इति वदेत्।

सुधीर्यजमानस्तं वस्त्रद्रव्यादिभिस्तोषयेत् ॥ तत्राऽऽदौ-षोडश-द्वादश-दशाष्टान्यतमसंख्यकहस्तो मण्डपश्चतुर्द्वारः कार्यः तत्र वरचतुष्कारां वधूचतुष्करां वा वेदीं चतुरस्रां सोपानयुतां प्राक् प्रवणां रंभास्तंभादिभि सर्वतः सुशोभितां गृहद्वाराद् वामभागे कुर्यात् ॥ ततो विवाह दिने तत्पूर्वदिने वा स्वे स्वे गृहे कन्यापिता वरपिता च सपत्नीकः कन्यापुत्राभ्यां सह मङ्गलं स्नात्वाऽहते वाससी परिधाय, धृततिलको ऽलङ्कारादिभिरलङ्कृतो मातृयागपुरः-सरं नान्दीश्राद्धं विधाय, बहिः शालायां शुभासने चोपविश्य, स्वदक्षिणतः संस्कार्यं ञ्चोपवेश्य, आचम्य, प्राणानायम्य।

(गर्भाधानादिसंस्कारलोप-प्रायश्चित्तं-कुर्यात्) हस्ते जलमादाय, देशकालौस्मृत्वा,

ममाऽस्य पुत्रस्या ऽमुक शर्मणः देव–पितृ-ऋणाऽपाकरणहेतुधर्म्मप्रजोत्पादनसिद्धिद्वारा–श्रीपरमेश्वर–प्रीत्यर्थं विवाह-संस्कार-कर्म करिष्ये, तत्राऽऽदौ निर्विघ्नतार्थं गणपति पूजनं, मातृकापूजनं नान्दीश्राद्धं, पुण्याहवाचनानि च करिष्ये। इति वरपक्षे सङ्कल्पः ॥१॥ कन्या-विवाह-पक्षे।

तु जातकर्म्मादिलोपे। हस्ते हेमरजतादिद्रव्यं गृहीत्वा, विप्रं सम्पूज्य।

देशकालौ स्मृत्वा ममाऽस्याः कन्यायाः गर्भाधानादिचूडान्त–संस्कारलोपजन्यप्रत्यवायपरिहारार्थं प्रतिसंस्कारमर्धकृच्छ्रं, चूडायाः कृच्छ्रं, तत्प्रत्याम्नाय गोनिष्क्रयी

---

मण्डप-विधान—कन्या के हाथ से सोलह हाथ लम्बा-चौड़ा मण्डप बनाकर उससे नैॠत्य कोण में मण्डप से मिला हुआ उत्तर-द्वार वाला कौतुकागार होना चाहिए। यदि उतना स्थान न मिले तो जितना मण्डपयोग्य प्राप्त हो 'उसके नैॠत्य कोण में कौतुकागार बना लेवे। और मण्डप के बाहर ईशानकोण में मण्डप से मिलित वर के हाथ से चार हाथ लम्बी चौड़ी वेदी बनानी चाहिए। वेदी की मिट्टी शुद्ध हो और वेदी रमणीय होनी चाहिये ॥ स्त्रीपुंसयोस्तु सम्बन्धो,वरणं प्राग्विधीयते। वरणाद् ग्रहणं पाणेः, संस्कारो द्विजलक्षणः ॥इति शुभम्॥

भूतं यथाशक्ति इदं हिरण्यादिद्रव्यमग्नि-दैवतममुकगोत्राया ऽमुक शर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे * ॥

इति सङ्कल्प्य, साक्षतोदकं द्रव्यं ब्राह्मणाय दद्यात् ॥

'स्वस्तीति'-प्रतिवचनम् । पुनः देशकालौ संकीर्त्य कन्यादाता प्रतिज्ञा-सङ्कल्पं कुर्यात्॥ अद्यामुकगोत्रो ऽमुक शर्म्माहं श्रुतिस्मृति पुराणोक्त फल प्राप्ति कामनासिद्ध्यर्थं ममाऽस्याः कन्यायाः भर्त्रा सह धर्मप्रजोत्पा-दनगृह्यपरिग्रह-धर्माचरणेष्वधिकारसिद्धि-

* विवाह के दिन से पहले तीन, छः, नौ, दिन छोड़कर शुभ दिनमें कन्या तथा वरके 'हल्दी-हाथ'-आदि कराके, कन्या के हाथ से १६ या १२ या १० या ८ परिमाण मण्डप चतुर्द्वार के बनाकर, उसमें कन्या के ४ हाथ की चोखुंठी-वेदी पूर्व को नीचे केला आदि से शोभित कर घर के बायीं ओर बनावे। मंगल स्नान के दिन नये- कपड़े, जेवर, तिलक (चन्दन) करके वर-कन्या के माता-पिता आसन में पिता की दाहिनी तरफ माता और उसके दाहिने वर या कन्या बैठे। आचमन, प्राणायाम करके वर या कन्या का जातकर्मादि-संस्कार न किया जाने के लिए व्रत या गोदान अथवा चांदीदान करके, ब्राह्मणको देवे। संस्कार लोप प्रायश्चित्त किये बिना विवाह ठीक नहीं होता। नान्दीश्राद्ध (नवः दैवत्य श्राद्ध) करना तो सभी जगह प्रचलित ही है।

द्वारा—श्रीपरमेश्वर प्रीत्यर्थं विवाह संस्कारं करिष्ये ।। तदङ्गतया विहितं निर्विघ्नतार्थं गणपतिपूजनं, मातृपूजनं, नान्दीश्राद्धं, स्वस्ति—पुण्याह—वाचनं, ग्रहपूजनं कलशस्थापनं, दिग्रक्षणञ्च करिष्ये ।।

इति-संकल्प्य, गणेशपूजादिकर्म कुर्य्यात् ।। ततः ।।

ॐ अद्येत्यादि० अमुकगोत्रोऽमुकराशिरमुकशर्माऽहं, कन्यादान प्रतिग्रहार्थं ग्रहागतं (१) स्नातकवरं (२) मधुपर्के—णार्चयिष्ये ।।इति सङ्कल्प्य ।। उत्तराभिमुखः स्वयं (३) पूर्वाभिमुखं वरं, ( काष्ठपीठे समुपवेश्य ) ॐ साधु भवनास्तामिति—प्रजापतिऋ षि—र्यजुश्छन्दो, ब्रह्मादेवता, वरार्चने-विनियोगः ।। ॐ साधु भवानास्तामर्चयिष्यामो

१—वर के द्वितीय विवाह में "स्नातक" यह शब्द न कहना चाहिये २-मधुपर्क विधि वर की शाखा में कही हुई करनी चाहिये ।। ३—सर्वत्र प्राङ्मुखो दाता प्रतिग्राही उदङ् मुखः । एष एव विधिर्दाने कन्यादाने विपर्ययः ।।

भवन्तमिति ब्रूयात् ॥ 'अर्चयेत्' च वरो ब्रूयात् ॥ विष्टरमादाय-ॐ विष्टरो विष्टरो विष्टर इत्यन्येनोक्ते, ॐ विष्टरः प्रतिगृह्य-तामिति कन्यादाता वदेत्। ॐ विष्टरं * प्रतिगृह्णामि इत्यभिधाय, वरो विष्टरं गृहीत्वा ॐ वर्ष्मोऽस्मीत्याथर्वणऋषिरनु-ष्टुप्छन्दो, विष्टरो देवता, उपवेशने-विनि-योगः॥ ॐ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्य्यः। इमं तमभितिष्ठामि यो मां कश्चा-भिदासति ॥

इत्यनेनासने उत्तराग्रं निधाय विष्टरोपरि वर उपविशति॥

तत्रोपविष्टे वरेयजमानः (जलञ्च कुंकुमं कैव तण्डुलाः पुष्पमेव च। सर्वौषधि

---

* पञ्चाशत्कुशको ब्रह्मा, तदर्धेन तु विष्टरः। ऊर्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्तको ब्रह्मा वामावर्तस्तुविष्टरः॥१॥ अर्थात् पचास कुश को दाहिनी ओर से ऐंठकर ब्रह्मा ओर पच्चीस कुशों को बायीं ओर से ऐंठकर विष्टर कहा जाता है॥ कर्काचार्य आदि के मतानुसार-एक विष्टरको ऊपर बैठने के लिए तथा एक विष्टर चरणों के नीचे रखने के लिए होना चाहिये। अमराचार्य के मतानुसार-काष्ठ आदि युक्त आसन के ऊपर आसन को विष्टर कहते हैं। उदाहरणार्थ वष्टरो विटपीदर्भमुष्टिः पीठाद्यमासनम्। इत्यमरः॥

समायुक्तं पंचांग पाद्यमुच्यते) पाद्यमञ्ज-
लिनादाय-ओ३म् पाद्यं पाद्यं पाद्यमित्यन्येनोक्ते,
ओ३म् पाद्यं प्रतिगृह्यतामिति दाता वदेत् ॥
ओ३म् पाद्यं प्रतिगृह्णामि (इत्यभिधाय यज-
मानाञ्जलितोऽञ्जलिना पाद्यमादाय वरः)
ओ३म् विराजो दोहो सीतिप्रजापतिर्ऋषिर्य-
जुश्छन्द, आपोदेवता, दक्षिणपादप्रक्षालने *
विनियोगः ॥ ओ३म् विराजो दोहोऽसि विराजो दोह मशीयमयि पाद्यायै विराजो दोहः

इति दाता वरस्य पूर्वं दक्षिणपादं प्रक्षाल्याऽनेनैव मन्त्रेण वामपादं प्रक्षालयेत् ॥ पुनः द्वितीय विष्टरमादाय-

ओ३म् विष्टरो विष्टरो विष्टरः । विष्टरः प्रतिगृह्यतामिति-दाता वदेत् ॥ विष्टरं प्रतिगृह्णामि ।

---

* ब्राह्मण-वर का पहले दक्षिण-चरण फिर वाम-चरण धोवे। अन्य वर हो तो पहिले बांया फिर दक्षिण धोवे। तदनन्तर पूर्ववत् द्वितीय विष्टर को लेकर उत्तर को उसका अग्रभाग करके चरणोंके नीचे रख लेवे कोई कहते हैं कि-वर कलश-द्रव्य देकर फिर दूसरा विष्टर ग्रहण करे ॥ कुकुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च एतान् गुणान् सप्तविचिन्त्यदेया कन्या बुधैः शेषमचिन्तनीयम् ॥

वरो वदेत् ॥ विष्टरं गृहीत्वा च वामचरणस्याधस्तादु-त्तराग्रं स्थापयेत् ॥

तत्र—मन्त्रस्तु-ॐ वर्ष्मोऽस्मीत्याथर्वण-ऋषिरनुष्टुप्छन्दो, विष्टरो देवता, उपवेशने-विनियोगः ॥ ॐ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्य्यः । इमं तमभितिष्ठामि यो मां कश्चाभिदासति ॥ ततोऽर्घं करणम् ॥ आपः [1]क्षीरं कुशाग्राणि, दध्यक्षततिलास्तथा । [2]यवाः [3]सिद्धार्थकाश्चैव, अर्घोऽष्टाङ्गः प्रकीर्त्तितः ॥१॥ अन्यच्च ॥ जलं दधि घृतं क्षीरं [4]बदरी तण्डुलास्तिलाः । सिद्धार्थकास्तथा [5]दर्भा अर्घोऽष्टाङ्गः प्रकीर्तितः ॥२॥ प्रतिष्ठाप्य ॥ इत्थं दर्भान्वितमष्टाङ्गमर्घंकन्यादातास्व हस्तेच धृत्वा ॐ अर्घो ऽर्घोऽर्घः इत्यन्येनोक्ते ॥ ॐ अर्घः प्रतिगृह्यतामिति-दाता वदेत् ॥ अर्घं प्रतिगृह्णामीति-वरो वदेत् ॥

१-जल । २-जौ । ३-सफेद-सरसों । ४-बेर । ५-कुशा ।

तत्र दाता-ॐ आगतोऽसि बरश्रेष्ठ, सर्वकामार्थसिद्धये। प्रतिग्रहसमर्थोऽसि, ग्रहाणार्घं नमोऽस्तु ते ॥ इति ब्रूयात् ॥ ततो वरो यजमानहस्तादर्घंपात्रं ग्रहीत्वा ॥

ॐ आपः स्थेतिमन्त्रस्य सिन्धुद्वीपऋषिर्यजुश्छन्द, आपो-देवताऽर्घग्रहणे-विनियोगः ॥ ॐ आपः स्थयुष्माभिः सर्वान् कामानवाप्नुवानि ॥ ततो वरः स्ववामकरस्थमर्घमभिमन्त्रयते-ॐ समुद्रं व इत्याथर्वणऋषिर्बृहतीछन्दो, वरुणोदेवता, अर्घाऽभिमन्त्रणे-विनियोगः ॥ ॐ समुद्रं वः प्रहणोमि स्वां योनिमभिगच्छत। अरिष्टास्माकं व्वीरा मापरासे चिमत्पयः ॥ इति वरोऽर्घस्थं जलमैशान्यां-दिशि संत्यजेत् ॥ ततो दातृशिरसि किञ्चिदक्षतादिकं दद्यात्। (ततःकन्यादाताऽऽचमनीयमादाय ॐ मनो जूतिरिति-तत्सम्पूज्य तत्पात्रं कन्याप्रदः स्वहस्तेनादाय) आचमनीयमाचमनीयमाचमनीयम्। इत्यन्येनोक्ते, 'आ-

चमनीयं प्रतिगृह्यता, मिति-दाता वदेत्॥ आचमनीयं प्रतिगृह्णामीति-वरो वदेत्॥ ततो वरो दातृहस्तादाचमनीयमादाय, ॐ आऽमागन्निति–परमेष्ठीऋषिर्बृहती-छन्द, आपो-देवता, आचमने-विनियोगः॥ ॐ आऽमाऽगन्यशसा स ँ सृज व्वर्चसा॥ तम्माकुरु प्रियं प्रजानामधिपतिं पशूनाम-रिष्टिं तनूनाम ॥ इति वरः सकृदाचम्य स्मार्ताचमनञ्च कृत्वा, वारद्वयं तूष्णीमा-चामेत्॥ * ततः कांस्यपात्रे दधिमधुघृतानि कांस्यपात्रपिहितानि दाताऽऽदाय (अन्यः) ॐ मधुपर्को मधुपर्को मधुपर्क इत्यन्येनो-क्ते॥ ॐ मधुपर्कः प्रतिगृह्यतामिति-दाता वदेत्॥ मधुपर्कं प्रतिगृह्णामीति–वरो वदेत्॥ ॐ मित्रस्य त्वा–इति–प्रजापति-ऋषिः पंक्तिश्छन्दो, मित्रो-देवता, दातृ-

* मधुपर्कमें घृत १ भाग, दधि १ भाग, मधु २ भाग होना चाहिये· उक्तञ्च-सर्पिरेकं गुणं प्रोक्तं, शोधितं द्विगुणं मधु ॥ मधुपर्कविधौ प्रोक्तं सर्पिषा च समं दधि ॥ १ ॥ इति पराशरः ॥

करस्थमधुपर्काऽवेक्षणे-विनियोगः ॥ ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ इति दातृ-करस्थं मधुपर्कं निरीक्ष्य वरः । ॐ देवस्य त्वेति बृहस्पतिराङ्गिरसऋषिर्यजुश्छन्दः, सविता-देवता, मधुपर्कग्रहणे-विनियोगः ॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ ततो वरो दातृहस्तान्मधुपर्कपात्रं गृहीत्वा, स्ववामहस्ते निधाय। ॐ नमः श्यावास्येति-प्रजापतिः ऋषिर्यजुश्छन्दः, सविता-देवता, स्वहस्तगतमधुपर्कमिश्रणे-विनियोगः ॥ ॐ नमः श्यावास्यायान्नशने यत्तऽआविद्धं तत्ते निष्कृन्तामि ॥

इत्यनामिकया त्रिः प्रदक्षिणमालोड्य, किंचिदनामिकाङ्गुष्ठाभ्यां भूमौ मधुपर्कं तूष्णीं क्षिपेत् एवं पुनर्द्विवारं निरीक्षणमालोडलञ्च कृत्वा त्रिः प्राश्नाति ॥

ॐ यन्मधुन-इति कुत्सऋषिर्जगतीछन्दो, मधुपर्को-देवता, मधुपर्कप्राशनेविनियोगः ॥ ॐ यन्मधुनो मधव्यं परम ँ रूपमन्नाद्यं

तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥

इति अनामिकाऽङ्गुष्ठाभ्यां त्रिर्मधुपर्कं वरः प्राश्नीयात्। प्रतिप्राशने चैतन्मन्त्रं पठेत् ॥ ततोमधुपर्कशेषमसंचरदेशे क्षिपेत्। ततो द्विराचम्य वरः द्वाभ्यां हस्ताभ्यां सर्वाङ्गानि स्पृशेत् ॥

तत्र वरपठनीयमन्त्राः ॥ ॐ वाङ् मऽआस्येऽस्तु (तर्जनीमध्यमा ऽनामिकाभिः मुखं स्पृशेत्) ॐ नसोर्मे प्राणोऽस्तु ॥ (अङ्गुष्ठप्रदेशिनीभ्यां नासिकारन्ध्रद्वयम्) ॐ अक्ष्णोर्मे चक्षुरस्तु ॥ (अङ्गुष्ठा ऽनामिकाभ्यां युगपच्चक्षुषी) ॥ ॐ कर्णयोर्मे श्रोत्रमस्तु (तथैवमन्त्रावृत्या पृथक्) ॥ ॐ बाह्वोर्मे बलमस्तु (अङ्गुल्यग्रैः) ॥ ॐ ऊर्वोर्मे ओजोऽस्तु (असंहताभ्याङ्गुलिभ्याम्) ॐ अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु ॥ इति सर्वाङ्गानि समालभ्य, वरसमीपे भूमावुदग्रान् दर्भानास्तीर्य, दाता वर-

हस्ते गोनिष्क्रयद्रव्यं दत्वा पठेत् ॥ ॐ गौ-र्गौर्गौः ततो वरः द्रव्यं गृहीत्वा गां स्तुत्वा चास्तुं तृणानि दत्वा (१) पठेत्-तत्र-मन्त्रः-ॐ मातेति-ब्रह्मर्षिस्त्रिष्टुप्छन्दो, गौर्देवता, गोरभिमन्त्रणे-विनियोगः ॥ * ॐ माता रुद्राणां दुहिता व्वसूना ७ स्वसादित्याना-ममृतस्य नाभिः । प्रणुव्वोचं चिकितुषे जनाय मा गामनागामदितिं व्वधिष्ट मम चामुष्य यजमानस्य च पाप्मा हतः ॐ ॥

---

* कुछ महानुभाव इस विधि एवं लिखित वाक्य को न समझ कर गोरूपवध करने में इस मन्त्र को लगाते हैं, फिर उसका प्राय-श्चित करते हैं। किन्तु यह कदापि उचित नहीं। कारण कि मन्त्र में "मागामनागामदिति-व्वधिष्ट" अर्थात् 'निपराध-गौ को मत मारो-ऐसा कहा है। तो फिर गौ की रक्षा एवं उसे तृण देना ही सर्वमान्य है, यहां तो गौ का पूजन स्तुति पालन करना ही बताया है।

यह गौ एकादश-रुद्रों की माता है, आठ वसुओं की कन्या है बारह-आदित्यों की बहिन है और अमृत का आश्रय है, इसलिये आप यह गौ मुझे दें। "इस गौ के दर्शन से मुझ वर का तथा दाता का पाप नष्ट हुआ" ये वाक्य धीरे से वर कहे।

यह भी लिखा है कि ब्राह्मण वर हो तो गोदान, क्षत्रिय हो तो भूमिदान, वैश्य हो तो अश्वदान देवे। इसके अभाव में सोना चांदी आदि दान करे।

इत्युपांशु पठेत् । 'उत्सृजत तृणान्यत्तु'-इत्युच्चैरुक्त्वा वरः स्वहस्तगतं द्रव्यं कुशोपरि उत्सृजेत् । दाता हस्ताभ्यां जलाक्षतंपुष्पाणि नीत्वा मधुपर्कीयगोदानं कुर्यात् ॥ अथवा ॥ तदुचितमूल्येन कुर्यात् ॥ ॐ अद्येत्यादि० अमुकोऽहं मधुपर्कोपयोगि-गोरुत्सर्गकर्मणः साद्गुण्यार्थे गोप्रत्याम्नायीभूतं सुवर्णं तन्निष्क्रयीभूतं रजतं वा ब्राह्मणाय वराय दास्ये ॥ ॐ तत्सत् ॥

ततो वरः दानभारदूरीकरणार्थं संङ्कल्पपुरः-सरंगोदानं तदुचितद्रव्यं वा ब्राह्मणाय [१] दद्यात् ॥

ॐ अद्येत्यादि०—अमुकोऽहं मधुपर्कोपयोगि—गोप्रतिग्रहदोषदूरीकरणार्थं तत्प्रत्याम्नायीभूतं सुवर्णं रजतद्रव्यं वा तुभ्यं दास्ये॥

इति-गोदानं, तदुचितमूल्यं वा आचार्याय दत्वा, दाता वरं वृणुयात् ॥

तत्र वरणद्रव्यम्—'स्वर्णांगुलीयवासांसि, फलं भाजनमासनम् । यज्ञोपवीतं माला च, द्रव्यं वरसमर्हणे ॥ पाद्यादीनि समर्पयामि॥

स्वर्णांगुलीय सहितवासोभ्यो नमः ।। इति सम्पूज्य ।। ॐ अद्येत्यादि०अमुकोऽहं,ममास्याः कन्यायाबीजगर्भसमुद्भवैनोनिबर्हणपूर्वक-दाम्पत्यैश्वर्यफलाऽभिवृद्धये, करिष्यमाणविवाहसंस्कारकर्मणि एभिः स्वर्णाङ्गुलीयवासोभिरग्निबृहस्पतिदैवतैरमुकगोत्र–प्रवरशाखिनममुक–वेदाध्यायिनममुक–शर्माणं ब्राह्मणं विष्णुरूपिणं वरं कन्यादानप्रतिग्राहकत्वेन त्वां वृणे ।।

इति वरणद्रव्यं वराय प्रयच्छेत् ।। ततोवरः–

वृतोऽस्मीति' प्रतिवचनान्तरं,ॐ कोऽदात् कस्माऽअदात् कामोऽदात् कामायादात् । कामो दाता कामः प्रतिगृहीता कामैतत्ते ।।

इति पठेत् ।। ततः कन्यावरौ वस्त्राणि मन्त्रपठनपूर्वकं परस्परं परिदधति ।। कन्या–

ॐ जराङ्गच्छेति-प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो, वासो-देवता,अधो वासः परिधाने-विनियोगः ।। ॐ जराङ्गच्छ परिधत्स्व

व्वासो भवाकृष्टीनामभि शस्ति पावा ॥ शतञ्च जीव शरदः सुवर्च्चा रयिञ्च पुत्राननु संव्ययस्वायुष्मतीदं परिधत्स्व व्वासः ॥ इति कन्याऽधोवस्त्रं परिधाय ॥ ॐ याऽअकृन्तन्निति—प्रजापतिर्ऋषिस्त्रि॰ष्टुप्छन्दो, वासो—देवतोत्तरीयपरिधाने-विनियोगः ॥ ॐ याऽअकृन्तन्नवयन्याऽअतन्वत ॥ याश्च देवीस्तन्तूनभितो ततन्थ। तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व व्वासः ॥ इति कन्या स्वोत्तरीयं वस्त्र परिधाय, द्विराचमनं कुर्यात् ॥ ततो वरः॥ ॐ परिधास्यै—इत्याथर्वणऋषिः, पंक्तिश्छन्दो, वासो-देवताऽधोवासः परिधाने विनियोगः ॥ ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतञ्च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ इत्यधोवस्त्रं वरः परिधाय ॥ ॐ यशसामित्यार्थर्वणऋषिः, पंक्तिश्छन्दो,

**वासो—देवता, कञ्चुकादि-परिधाने—विनियोगः ॥ ॐ यशसामाद्यावापृथिवी यशसेन्द्राबृहस्पती ॥ यशोभगश्च मा विन्दद्य शो मा प्रतिपद्यताम् ॥ इति वरः कञ्चुकं परिधापयेत् ॥ द्विराचम्य ॥**

× ॐ युवासुवासा—इति विश्वामित्रऋषिस्त्रिष्टुप्छन्दो, यूपोदेवतोष्णीषपरिधाने-विनियोगः ॥ [ॐ युवासुवासाः परिवीतऽआगात्सऽउ श्रेयान्भवति जायमानः । तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः । इत्युष्णीषं वरः शिरसि परिदध्यात्] ॥ ततो-वरायाऽलङ्करणानि दद्यात् ॥ हिरण्यगर्भसम्भूतं, पवित्रं चाङ्गुलीयकम् । भाद्रपदं प्रदास्यामि, प्रीणातु कमलापतिः ॥ १ ॥ क्षीराऽब्धिमथने पूर्वं चोद्धृतं कुण्डलद्वयम् । श्रिया सह समुद्भूतं, ददे श्रीः प्रीयतामिति ॥२॥ अशून्यं शयनं नित्यमशून्यामुन्नति श्रियम् । सौभाग्यं देहि मे नित्यं शय्यादानेन केशव ॥३॥ हंसतूलीसमायुक्तां, मृद्वीं खट्वामलङ्कृताम् । सर्वोपस्करणोपेतां, शिवयय्यां निवेदये ॥ ४ ॥ परापवादपैशुन्यादभक्ष्यस्य च भक्षणात् । उत्पन्नपापं दानेन, ताम्रपात्रस्य नश्यतु ॥ ५ ॥ यानि पापानि काङ्क्ष्याणि, कालोत्थानि कृतानि वा । अगम्या-कांस्यपात्र-प्रदानेन, तानि नश्यन्तु मे सदा ॥ ६ ॥

× यह विधि कहीं किसी देश विशेष में है सर्वत्र नहीं । सूत्र ग्रन्थों में इसका वर्णन नहीं है ।

गमनं चैव, परदाराऽभिमर्शनम् ॥ रौप्यपात्रप्रदानेन, तत्पापं मे व्यपोहतु ॥ ७ ॥ दीपस्तमो नाशयति, दीपः कान्ति प्रयच्छति । तस्माद्दीपप्रदानेन, मम वंशप्रवर्धनम् ॥ ८ ॥ वस्त्राणां छादनं यस्मादतः स्थावरजङ्गमम् । तस्मादेतत्प्रदानेन, मम सन्तु मनोरथाः ॥ ९ ॥ ततो—धूल्यर्घदक्षिणां दद्यादिति ॥ ततोऽग्निस्थापनम् ।

**तत्र हस्तमात्रभूमिं कुशैः परिसमुह्य, तान् कुशानैशान्यां परित्यज्य, गोमयोदकेनोपलिप्य, जलेनाभ्युक्ष्य, स्रुवमूलेन प्रागग्रास्तिस्रो रेखा विलिख्य, उल्लेखनक्रमेणाऽनामिकांगुष्ठाभ्यां मृदमुद्धृत्य पुनर्जलेनाभ्युक्ष्य, तूष्णीं काँस्यपात्रोपनीतं योजकनामानं वन्हि स्वाभिमुखं वेद्यामग्निकोणादानीय संस्थापयेत् ॥ ॐअग्निं दूतं पुरोदधे**

---

असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ १ ॥ वैवाहिको विधिः स्त्रीणां, संस्कारो वैदिकःस्मृतः॥ न कन्यायाः पिता विद्वान्,गृह्णीयाच्छुल्कमण्वपि।गृह्णञ्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥२॥ क्रयक्रीता च या कन्या पत्नी सा न विधीयते । तस्यां जाताः सुतास्तेषां पितृपिण्डं न विद्यते ॥३॥ कन्यायां दत्तशुल्कायां, ज्यायांश्चेद्वर आव्रजेत् । धर्मार्थकामसंयुक्तं, वाच्यं तत्रानृतं वदेत् ॥ ४ ॥

हृव्यवाहमुपब्रुवे देवाँ ॥२ आसादयादिह ॥

ॐ भूर्भुवःस्वः,अग्ने ! इहागच्छेह तिष्ठ* ॥

ॐ प्रसीदवन्हे सन्ताचें, कृशानो हृव्यवाहन । अग्ने पावक शुक्रार्यनाष्टमाक नमोऽस्तु ते । इत्यग्नि सम्प्राथ्यं, रक्षार्थं किञ्चिन्नियुज्य,वेदीशानभागे दीपञ्च प्रज्वालयेत् ।

## ❀ अथ कन्यादानविधिः ❀

तत्र देशाचाराद्वाद्यघोषपुरस्सरो वरः कौतुकागारं गच्छन् दातृद्वारा कन्यावरान्तरे वस्त्रं दद्यात् ॥

अथ कन्यापिता 'परस्परं समञ्जेऽथामिति' प्रैषपूर्वकं सम्मुखौ कुर्यात् । वरस्तु सम्मुखीभूतः सन् मन्त्रं पठति ॥ समञ्जन्त्विति-आथर्वणऋषिरनुष्टुप्छन्दो, लिङ्गोक्ता-देवता, परस्पर समञ्जने विनियोगः ॐ समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । सम्मातरिश्वासन्धाता समुदेष्ट्री दधातु नौ । इतिवरः पठेत् । ततो वरकन्ययोर्हस्तेन गणपत्यादिपञ्चाङ्ग देवता-पूजनञ्च कारयितव्यम् ॥ ततआचारात्

---

* कुश कण्डिका विधि भाषा में नामकर्म्म संस्कार में दे दी गई है अतः आवश्यकतानुसार वहां से देख कर इसका प्रयोग कर लें।

गोत्रोच्चारणं पूर्वं वरस्य, पश्चात्कन्यायाश्चविप्रः करोति ॥ ततो वरपक्षीयः ॥ ब्रह्मा वेदपतिः शिवः पशुपतिः सूर्यो ग्रहाणां पतिः, शक्रो देवपतिर्हविर्हुतपतिः स्कन्दश्च सेनापतिः ॥ विष्णुर्यज्ञपतिर्यमः पितृपतिर्ज्योतिस्पतिश्चन्द्रमाः, सर्वे ते पतयः सुमेरुसहिताः, कुर्वन्तु वां मङ्गलम् ॥ १ ॥ (वरपक्षीय) अमुकगोत्रस्या ऽमुक प्रवरस्या ऽमुकशाखिनो ऽमुकवेदाध्यायिनो ऽमुक नाम शर्म्मणः प्रपौत्रः, पौत्रः, पुत्रः प्रयतपाणिः शरणं प्रपद्ये, स्वस्ति सम्वादेषूभयोर्वृद्धिः॥ ततो कन्या पक्षीयः ॥ मत्स्यः कूर्मतनुर्वराहनृहरी श्रीवामनो भार्गवः । तद्वद्दाशरथिश्च यादवपतिर्बुद्धोऽथ कल्किस्तथाः । अन्ये चाऽपि सनत्कुमारकपिलप्राणाः

---

कोशल्या विशदालवालजनितः सीतालताऽऽलिगितः, सिक्तः पंक्तिरथेन सोदरमहाशाखाऽभिसंवर्धितः । रक्षस्तीव्रनिदाघपाटनपटुश्छायाश्रितानन्दकृत्, युष्माकं स त्रिभूतयेऽस्तु भगवान् श्रीरामकल्पद्रुमः ॥१॥

कलांशाः हरेः, सर्वे ते कलि कल्मषाप हरणाः कुर्वन्तु ते मंगलम् ।।२।।(कन्या-पक्षीय)अमुकगोत्रस्या ऽमुक प्रवरस्या ऽमुकशाखिनो ऽमुक वेदाध्यायिनो ऽमुकनामशर्म्मणः प्रपौत्री पौत्री, पुत्री प्रयतपाणिः शरणं प्रपद्ये, स्वस्ति सम्वादेषूभयोर्वृद्धिः ।। ततः वरपक्षीयः ।। आदित्योऽग्नियुतः शशी सवरुणो भौमः कुवेरान्वितः,सौम्यो विश्वयुतो गुरुः समघवा देव्या युतो भार्गवः ।। सौरिः केतुयुतः सदासुर वरो राहुर्भुजंगेश्वरो, मांगल्यं सुखःदुख-दाननिरताः, कुर्वन्तु सर्वे-ग्रहाः ।। ३ ।। (वर-पक्षीय) अमुकगोत्रस्या ऽमुक प्रवरस्या ऽमुकशाखिनो ऽमुकवेदाध्या

देवक्यां यस्य सूतिस्त्वमगात विदिता रुक्मिणी धर्मपत्नी, पुत्राः प्रद्युम्नमुख्याः सुरनरजयिनो वाहनं पक्षिराजः। वृन्दारण्यं विहारो व्रजपुरवनिता वल्लभा राधिकाद्याश्चक्रं विख्यातम स जयति जगतां स्वस्तये नन्दसूनुः ।। २ ।। रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवामभ्यर्णं परिरभ्य निर्भरमुरः प्रेमान्धयाराधया। साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुतिः, व्याजालिंगनचुम्बितः स्मितमनोहारी हरिः पातु वः ।। ३ ।।

यिनो ऽमुक नाम शर्म्मणः प्रपौत्रः, पौत्रः, पुत्रः प्रयतपाणिः शरणं प्रपद्ये, स्वस्तिसम्वादेषूभयोर्वृद्धिः ।। ततो कन्या पक्षीयः। गङ्गा सिन्धुसरस्वती च यमुना गोदावरी नर्मदा, काबेरी सरयू महेन्द्रतनया चर्मण्वती वेदिका ।। क्षिप्रा वेत्रवती महासुरनदी ख्याता च या गण्डकी। पूर्णाः पुण्यजलैः समुद्रसहिताः कुर्वन्तु ते मंगलम् ।।४।। (कन्या-पक्षीय) अमुक गोत्रस्या ऽमुक प्रवरस्या ऽमुक शाखिनी ऽमुक वेदाध्यायिनो ऽमुकनामशर्म्मणः प्रपौत्री, पौत्री, पुत्री प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्वादेषूभयोर्वृद्धिः ।। ततः वरपक्षीयः ।। आयुः द्रोणसुते श्रियो दशरथे शत्रुक्षयो राघवे। ऐश्वर्यं नहुषे गतिश्चपवने मानश्च दुर्योधने। शौर्यं शान्तनवे बलं हलधरे सत्यञ्च कुन्तीसुते। विज्ञानं विदुरे भवन्तु भवतः कीर्तिश्च नारायणे ।।५।। (वर–पक्षीय)अमुकगोत्रस्या

ऽमुक प्रवरस्या ऽमुकशाखिनो ऽमुकवेदाध्या-
यिनो ऽमुक नाम्न शर्म्मणः प्रपौत्रः, पौत्रः, पुत्रः
प्रयतपाणिः शरणं प्रपद्ये, स्वस्ति सम्वादे-
षूभयोर्वृद्धिः ।। ततो कन्यापक्षीयः ।। आयु-
ष्मान् भव पुत्रवान् भव सदा, श्रीमान् यश-
स्वी भव । प्रज्ञावान्भव भूरिभूतिकरणे
दानैकनिष्ठो भव । तेजस्वी भव वैरिदर्प-
दलने व्यापारदक्षो भव, श्रीशम्भोर्भवपाद-
पूजनरतः सर्वोपकारी भव ।। ६ ।। (कन्या-
पक्षीय) अमुक गोत्रस्या ऽमुक प्रवरस्या ऽमु-
कशाखिनो ऽमुक वेदाध्यायिनो ऽमुकनाम-
शर्म्मणः प्रपौत्री, पौत्री, पुत्री प्रयतपाणिः
शरणं प्रपद्ये, स्वस्ति सम्वादेषूभयोर्वृद्धिः ।।
ततः वरपक्षीयः ।। आयुर्बलं विपुलमस्तु
सुखित्वमस्तु सौभाग्यमस्तु विशदा तव
कीर्तिरस्तु । श्रेयोऽस्तु धर्ममति रस्तु रिपु-
क्षयोऽस्तु, सन्तानवृद्धिरभिवाञ्छितसिद्धि-
रस्तु ।। ७ ।। (वर-पक्षीय) अमुकगोत्रस्या

ऽमुक प्रवरस्या ऽमुकशाखिनो ऽमुकवेदाध्या-
यिनो ऽमुक नाम शर्म्मणः प्रपौत्रः, पौत्रः,
पुत्रः प्रयतपाणिः शरणं प्रपद्ये, स्वस्ति
सम्वादेषूभयोर्वृद्धिः ॥ ततः कन्यापक्षीयः॥
दीर्घायुर्भव-जीव वत्सरशतं नश्यन्तु सर्वा-
पदः स्वस्थः सम्भव मुञ्च चञ्चलधियं
लक्ष्म्यैकनाथो भव ॥ किं ब्रूमो भृगुगौतमा-
त्रिकपिलव्यासादिभिर्भाषितं, यद्रामस्य
पुराऽभिषेकसमये तच्चाऽस्तुते मंगलम् ॥८॥
(कन्या-पक्षीय) अमुकगोत्रस्या ऽमुक प्रवर-
स्या ऽमुकशाखिनो ऽमुकवेदाध्यायिनोऽमुक-
नामशर्म्मणः प्रपौत्री, पौत्री, पुत्री प्रयतपाणिः
शरणं प्रपद्ये, स्वस्ति सम्वादेषूभयोर्वृद्धिः ॥
यावदिन्द्रादयो देवा, यावच्चन्द्रदिवाकरौ।
यावद्धर्मक्रियालोके तावद्भूयात् स्थिति-
स्तव ॥९॥ ततः ॐ अद्येत्यादि० विवाह-
कर्मणि द्विजद्वाराकारितस्य शाखोच्चा-
रणकर्मणः साङ्गतासिद्ध्यैच इमां दक्षिणां

**ब्राह्मणाय दास्ये ॥ ॐतत्सत् ॥**

इति गोत्रोच्चारणदक्षिणां दद्यात् ॥ ततो लग्ने समायाते ग्रहदानानि कुर्यात् ॥ ततः दाता स्वयमुत्तराभिमुखः, पश्चिमाभिमुखी कन्यां, पूर्वाभिमुखाय वराय विधिना दानं दद्यात् * ।

**दाताऽहं वरुणो राजा, द्रव्यमादित्यदैवतम् । वरोऽसौ विष्णुरूपेण, प्रतिगृह्णात्वयं विधिरिति वरं सम्प्राथ्र्य, कन्यां सम्पूजयेत् ॥ ॐ श्रीश्चते० । इति गन्धविलेपनम् ॥ ॐ अम्बेऽ अम्बिकेबालिके न मानयति कश्चचन, ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ इत्यक्षतञ्च ॥ ॐसमख्ये देव्या धिया संदक्षिणयोरुचक्षसा । मा मऽआयुः प्रमोषीर्मोऽअहं तव व्वीरं व्विदेय तव देवि संदृशि ॥ इति—पुष्पादिकं दत्वा ॥ ततः कन्याप्रदकर्तृकं ग्रन्थिबन्धनं कङ्कणबन्धनञ्च ॥**

---

* दीर्घकाष्ठे शिलापृष्ठे, नौकायां शकटे तटे । विवाहे बहुसम्पर्के स्पर्शदोषो न जायते ॥ १ ॥ अतः इन स्थानोंमें स्पर्श-दोष नहीं माना जाता

अथ कन्यादानम् ॥ कन्यादाता शंखस्थ दूर्वाऽक्षतफल पुष्पचन्दनजलान्यादाय, जामातृदक्षिणकरोपरि कन्यादक्षिण-करं निधाय, कन्यादान संकल्पं कुर्यात ॥

ॐ अद्य तत्सद्ब्रह्म ॥ अथाऽनन्तवीर्यस्य श्रीमन्नारायणस्याऽचिन्त्याऽपरिमिताऽनन्त शक्तिसमन्वितस्य स्वकीयमूलप्रकृतिपरम-शक्त्याप्रक्रीडमानस्य सच्चिदानन्दसन्दोह-रूपे स्वात्मनि सर्वाऽधिष्ठाने स्वज्ञानकल्पि-तानां महाजलौघमध्ये परिभ्रमसमाणानामने-ककोटिब्रह्माण्डानामेकतमेऽस्मिन् ब्रह्माण्ड-खण्डे अव्यक्तमहदहङ्कारपृथिव्यप्तेजोवा-य्वाकाशादिभिर्दशगुणोत्तरैरावरणैरावृते, आधारशक्तिश्रीकूर्मवराहधर्मानन्ताष्ट- दि-ग्गजादि प्रतिष्ठिते, ऐरावत पुण्डरीक-वामन-कुमुदाञ्जन-पुष्पदन्त-सार्वभौम-सुप्र-तीकाऽ ऽख्याऽष्टदिग्दन्तिशुण्डदण्डोद्दण्डिते, तदेतद्ब्रह्माण्डान्तर्गतभूर्लोक भुवर्लोक--स्व-र्गलोक--महर्लोक-जनलोक-तपोलोक--सत्य-

लोकाऽऽख्यानां-सर्वज्ञ-सर्वशक्ति-सर्वोत्तम-सर्वाधिप-श्रीचतुर्मुखप्रभृति स्वस्वलोकाऽधिष्ठातृ-पुरुषाऽधिष्ठितानामधोभागे, फणिराजराजस्य शेषस्य सहस्रफणमण्डलैकफणोपरि, सर्षपकणायमानमहीमण्डलान्तर्गताऽतलवितल-सुतल तलातल-महातल-रसातल-पातालानां स्व-स्वाधिष्ठानाऽधिष्ठितानामुपरिभागे, सुमेरु-मन्दराचल-निषधहिम गिरिशृङ्गवद्धेमकूटदुर्धर्षपारियात्रशैलमहाशैलमहेन्द्रसह्यमलयाचल -विन्ध्यर्ष्यमूक चित्रकूटमैनाकमानसोत्तरत्रिकूटोदयाचलपर्यन्ताऽनेकाभिधानादि -गणप्रतिष्ठितायाम्, जम्बूप्लक्षशाल्मलीकुशक्रौञ्चशाकपुष्कराख्यसप्तद्वीपवत्याम्, लवणेक्षुसर्पिर्दधिक्षीरशुद्धोदकाख्यसप्तसागरसमन्वितायाम्, समस्तभूरेखायाम्, कमल कदम्बगोलकाकारायाम्, वर्तमाने कुवलयकोशान्तर्गत-दलवद्विराजमाने, उत्तर कुरु हिर-

ण्यकरम्यकभद्राश्वकेतुमालेलावृतहरिवर्ष-किम्पुरुष-भारताख्य-नवखण्डवति जम्बूद्वीपे, सर्वेभ्यो व्यतिरिक्तसारवति, देवादिभिरप्यभीष्टसुकृतक्षेत्रभूतहेतुनाभिलषिततमे, अंगवंगकलिंग-काम्बोजसौवीरसौराष्ट्रमहाराष्ट्रवंगानलोत्कलमगधमालव -नेपाल-केरल-चोल-गौड़मल-पाञ्चाल -सिंहल-मत्स्य-द्रविड़-कर्णाटक- राटव-शूरसेन-कौंकण-टौंकण-पोण्डच पुलिन्ध्रान्ध्रद्रौणदशार्ण-विदेहविदर्भ - मैथिलि,-केकय-कौशल-कुन्तल-सैन्धव-जावल-सार्वसिन्धु-मद्र-मध्यदेशपर्वत-काश्मीर-पुष्ठाहार- सिन्धुपारसिकगान्धार-वाह्नीकप्रभृतिबहुविधदेशविशेषसम्पन्ने, दण्डकारण्य-नैमिषारण्य-चम्पकारण्य-बदरिकारण्य कामिकारण्य--धर्मारण्य-- छेतारण्य--कामुकारण्य-सैन्धवारण्यप्रभृत्यनेकारण्यवति, श्रीगङ्गा--यमुना--सरस्वती--गोदावरी--नन्दा-

मन्दाकिनी—कौशिकी, नर्मदा, सरयू, कर्मनाशा, चर्मण्वतीक्षिप्रा-वेत्रवती—कावेरी—फल्गू—मार्कण्डेयी—रामगंगा--शतद्रु--विपाशैरावती--चन्द्रभागा--वितस्ता---सिन्धु—दृषद्वतीप्रभृत्यनेकनदीनदवति, कुरुक्षेत्र, हरिद्वारक्षेत्र-मालक्षेत्रान्विते भारतखण्डे तत्राऽपि, मध्यरेखायां कुरुक्षेत्रात्पश्चिमे भागे, शतद्रु—विपाशातीरयोर्मध्ये, पुण्यक्षेत्रे, बदरिकाश्रमादिके, गर्गवराहाद्याचार्य गणितसंख्यायां श्रीब्रह्मणो द्वितीयपरार्धेऽह्नो द्वितीययामे, तृतीयमुहूर्ते, श्रीश्वेतवाराहनाम्नि प्रथमकल्पे, स्वायम्भुव—स्वारोचिषोत्तमतामस--रैवत — चाक्षुषेतिषण्मनूनामतिक्रम्यमाणे, सम्प्रति सप्तमे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे, कलियुगस्य प्रथमचरणे, बौद्धावतारे, श्रीमन्नृपतिविक्रमाऽर्कसमयात् सम्वत्सराणां समयेनाऽतिक्रान्तानां षष्ट्यब्दानां मध्येऽमुकनामसम्वत्सरे ऽमुकायनेऽमुकर्तौ,

मासे, पक्षे, वारे, नक्षत्रे, योगे, करणे, सुमुहूर्तेऽमुकराशिस्थिते, सूर्य्ये, चन्द्रे, भौमे, बुधे, गुरौ, शुक्रे, शनौ, राहौ, केतौ,—एवं ग्रहगुणगणविशेषण विशिष्टायाम्, शुभपुण्यतिथावऽमुकगोत्र—प्रवरराशिरमुकशर्माऽहं, सपत्नीकोऽहम् मुकगोत्रस्याऽमुकप्रवरस्याऽमुकशाखिनोऽमुकवेदाध्यायिनोऽमुकशर्मणः प्रपौत्राय, पौत्राय, पुत्राय, आयुष्मते विष्णुस्वरूपिणे कन्यार्थिनेऽमुकशर्म्मणे वराय अमुकगोत्रस्यऽमुकप्रवरस्याऽ मुकशाखिनोऽमुकवेदाध्यायिनोऽमुकशर्मणः प्रपौत्रीं पौत्रीं पुत्रीमायुष्मतीं श्रीरूपिणीं वरार्थिनीममुकनाम्नीमिमाँ कन्यां, यथाशक्त्यलंकृतां, यथाशक्त्यु पकल्पितयौतकयुतां, प्रजापतिदैवताँ, मम पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रसमफलप्राप्तिपूर्वकं, मम समस्तपितृणां निरतिशयानन्दब्रह्मलोकावाप्त्यादिफलावाप्तिपूर्वकं श्रीलक्ष्मीनारायणप्रीतये च तथाऽ-

तेन वरेणास्यां कन्यायामुत्पादयिष्यमाण-सन्तत्या दशपूर्वान् दशापरान्मां चैकविंश-तिपुरुषान् पवित्रीकर्तुं देवाग्निगुरुब्राह्मण-सन्निधावरुन्धत्यादिसाक्षिकतया सह धर्म्माच-रणाय पत्नीत्वेन *ब्राह्मविवाहविधिना तुभ्यमहं सम्प्रददे ॥ प्रतिगृह्णातु भवान् ॥

इत्युक्त्वा दाता चोत्थाय सकुशाक्षतजलं कन्यादक्षिण-हस्तं वरस्य दक्षिणहस्ते समर्पयेत् × ॥ स च कन्याहस्त-मञ्चलग्रन्थिबन्धनपर्य्यन्तं न मुञ्चेत् ॥

'ॐ स्वस्तीति'—प्रतिवचनम् ॥ ततः

प्रार्थना ॥ कन्यां लक्षणसम्पन्नां, कनका—
भरणैर्युताम् ॥ ददामि विष्णवे तुभ्यं, ब्रह्म-
लोकजिगीषया ॥१॥ विश्वम्भराः सर्व—
भूताः, साक्षिण्यः सर्वदेवताः ॥ इमां कन्यां
प्रदास्यामि, पितॄणां तारणाय च ॥ २ ॥
गौरींकन्यामिमां विप्र यथाशक्तिविभूषि—

---

* सामान्यत. विवाह ब्राह्मादिक आठ-प्रकार के होते हैं। कई आचार्य सोलह प्रकार के कहते हैं।

× कन्यार्थं कनकं धेनु दासीरथमहा गृहाः। महीव्यश्वगजाः शय्या, महादानानि वै दश ॥ ये दश-महादान कन्यादान के साथ-साथ वर को दिये जाते हैं।

ताम् । गोत्राय शर्मणे तुभ्यं, दत्तां त्वं समुपाश्रय ॥३॥ कन्या लक्ष्मीः समाख्याता, वरो नारायणः स्मृतः ॥ तस्मात् कन्याप्रदानेन, विष्णुर्मे प्रीयतामिति ॥४॥ कन्ये! ममाग्रतो भूयाः, कन्ये मे देवि पार्श्वयोः। कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥५॥ श्रीनारायणप्रार्थना ॥ ॐ त्रैलोक्यनाथ ! देवेश ! सर्वभूतदयानिधे ! दानेनानेन सुप्रीतः, सदा शान्तिं प्रयच्छ मे ॥

ततो वरः ॐ देवस्यत्वेति० ' मन्त्रेण कन्याग्रहणं कुर्यात्।

ततो दातावदेत् ॥ ममाऽन्वये समुद्भूता, पालिता वत्सराऽष्टकम् । तुभ्यं विप्र ! मया दत्ता, पुत्रपौत्रप्रवर्द्धिनी ॥१॥ धर्मे चार्थे च कामे च, त्वयेयमतिचारतः । न त्याज्याज्यहुतिरिव,भूमौ संसारभूतिदा ॥२॥ यस्त्वया धर्मश्चरितः, कर्तव्यश्चानया सह । धर्मे चार्थे च कामे च, नातिचर्या त्वया क्वचित् ॥३॥ ततो वरः कथयति ॥ अहं नातिचरामीह,

यदुक्तं भवता ततः । धर्मार्थकामकैः कार्यैर्देहच्छायेव सर्वदा ।। १ ।। ततो दाता—ॐ अद्येहामुकोऽहं कन्यादानकर्मणः साद्गुण्यार्थं फलप्रतिष्ठासिद्ध्यर्थमिदं सुवर्णमग्निदैवतं विष्णुरूपाय वराय तुभ्यं सम्प्रददे ।।

दत्वा च परस्परं 'ॐ युवा सुवासा'-इति मन्त्रेण वरकन्ययोः कटिदेशे संलग्नमञ्चल* ग्रन्थि बध्नीयात् ।।

अत्र च देशाचाराच्छोलिकादानम् ।। (जीवत्पति-पुत्रवतीस्त्रीद्वारा कांस्यपात्रस्थद्रव्यं कन्याहस्तेन कदलीफलाम्रफलमातुलुङ्गफलद्राक्षाफलदाडिमीफल—पूगीजातीजम्बीरनारिङ्गनार केलबीजपूरपनसाऽक्षोटकफलानि सदिक्षुदण्डोत्तराणि सुवर्ण रौप्य

---

* शिष्टाचारादत्र। कन्या प्रदकर्तृकं ग्रन्थिबन्धनम् कन्याकासुदशे पार्श्वे, द्रव्यपुष्पाक्षतानि च । निक्षिप्य तानि संबद्ध्वा, वरवस्त्रेणसंयुजेत् ।।१।। वस्त्रैः संयोज्य तौ पूर्वं, कन्यादानं समाचरे दिति ।। ग्रन्थिबन्धन मन्त्रः ।। ॐ गणाधिपं नमस्कृत्य, नमस्कृत्य महेश्वरम् ः दम्पत्योः प्रीतिसिद्ध्यर्थं, ग्रन्थिबन्धं करोम्यहम् ।।१।। ॐएतन्ते देव सवितः० ।। यह विधी भी किसी देश विशेष में होती है, सर्वत्र नहीं ।

काँस्यादिपात्रस्थितानि जीवत्पतिपुत्रवती स्त्रीहस्तेन ब्राह्मणाय दद्यात )॥ ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूतास्तानो मुञ्चन्त्व ँ हसः ॥ "ॐ भद्रङ्कर्णेभिः शृणु०" ॥१॥ द्वितीयम्। कर्पूरलवङ्गवासितखण्डमरीचशर्करा घृतसंस्कृतानि मोदकघृतपूरकुण्डलिनीमल्लपूपामृतशष्कुलीफेणिकादीनि सर्वरसान्वितानि विविधपक्वान्नानिसुवर्णरौप्यकाँस्यादिपात्रस्थितानि जातमात्रजीवत्पुत्रवती-स्त्रीहस्तेन ब्राह्मणाय दद्यात् ॥ ॐअन्नपतेऽन्नस्यनो देह्यनमीवस्य शुष्मिणः। प्रप्रदातारन्तारिष ऽऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥२॥ तृतीयम् ॥ माणिक्यमहानीलपद्मरागरत्नमुक्ताखचितहाटकमुकटहंसहंसावलिकेयूरहस्तांगुलीयपादकटकपादांगुलीयग्रैवेयकशिरोरत्नकाञ्चीवल्लीनासिकेयमालादि—विविधाऽऽभरणानि, सुव-

र्णरौप्यकाँस्यादिपात्रस्थितानि जातमात्र-
जीवत्पुत्रवतीस्त्रीहस्तेन सुवासिन्यै दद्यात् ॥
ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य
जातः पतिरेक ऽआसीत् । स दाधार पृथिवीं
द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥ ॐ
रूपेणवोरूपमभ्यागातुं थोवोविश्ववेदा-
विभजतु । ऋतस्य पथा प्रेत चन्द्रदक्षिणा
विश्वः पश्य व्यन्तरिक्षं यतस्व सदस्यै
॥३॥ चतुर्थम् ॥ हरितश्वेतपीतरक्तनील-
माञ्जिष्ठक्षौमकार्पासोर्णाम्बरसहितानि,
नानादिग्देशजातानि, बहुक्रयक्रीतानि,
सर्वदृष्टिमनोहराणि श्वेताम्बराणि, सुवर्ण-
जलसिञ्चनशोभितानि, सुवर्णरौप्यकाँ-
स्यादिपात्रस्थितानि, जातमात्रजीवत्पुत्र-
वतीस्त्रीहस्तेन कन्यायै दद्यात् ॥ ॐ यद-
श्वाय वासऽउपस्तृणन्त्यधीवासं या हिर-
ण्यान्यस्मै । सन्दानमर्व्वन्तं षड्वीशं प्रिया
देवेष्वायामयन्ति ॥ ॐ स्वर्णधर्मः स्वाहा,

स्वर्णार्कः स्वाहा, स्वर्णशुक्रः स्वाहा, स्वर्णज्योतिः स्वाहा, स्वर्णसूर्य्यः स्वाहा। केचित् पञ्चवारं सप्तवारं वा कुर्वन्ति॥ इति छोलिकाऽऽभरणदानम्॥

ततः कौतुकागाराद्वरः श्वशुरदत्तां कन्यां बहिर्निष्कासयेत्॥

ॐ यदैषीति अथर्वणऋषिः अनुष्टुप्छन्दो दिग्देवतानिष्क्रामणे विनियोगः।ॐ यदैषि मनसा दूरं दिशोनुपमानो वा हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु श्री * अमुकी देवीति।

पठन् वरस्तां निष्क्रामति॥ कन्यापिता 'परस्परं समीक्षेथाम्'-इति प्रेषयति। ततो वरकन्ययोः परस्परं निरीक्षणम्॥

ॐ अघोरचक्षुरित्यादिचतुर्णां मन्त्राणां प्रजापतिऋर्षिस्त्रिष्टुप्छन्दः कुमारीदेवता, परस्परनिरीक्षणे--विनियोगः॥ ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः। वीरसूर्देवृकामा स्योना शन्नो

---

* अमुकी देवीत्यस्य स्थानेवधूनामगृह्णीयात्।

भव द्विपदेशञ्चतुष्पदे । ॐ सोमः प्रथमो
विविदे गन्धर्व्वो विविद उत्तरः । तृतीयो
ऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ॐ
सोमो ददद्गन्धर्व्वाय गन्धर्व्वो दददग्नये ।
रयिञ्च पुत्राँश्चादादग्निर्म्मह्यमथोऽइमाम् ।
ॐ सा नः पूषा शिवतमामैरयसा न ऽऊरू
उशती विहर । यस्यामुशन्तः प्रहराम शेपं
यस्यामुकामा बहवो निविष्टचै ॥ इति
वरः पठन् परस्परं निरीक्षणं कुर्यात् ॥ ततो
बहिः मण्डपेषोडशस्तम्भान् प्रदक्षिणीकृत्य,
चतुर्हस्तां चतुरस्रां वेदिकाञ्च शुद्धोदके-
नोपलिप्य, तत्र तृणपूरककटं निधायाग्नेः
पश्चाद्वधूं स्वदक्षिणतः समुपवेश्य, वामतः
स्वयमुपविश्य,वरः सामग्रीं सम्पाद्य,पूर्वाऽ-
भिमुखः सङ्कल्पयेत् ॥ देशकालौ संकीर्त्या-
द्येत्यादि० असुकगोत्रो ऽमुकनाम शर्म्माऽ-
हम्, अस्या भार्यायाः पत्नीत्वसिद्धये वैवा-
हिक-होममहं करिष्ये ॥ तथा श्वसुरदत्ता-

मेनां कन्यां ब्राह्मविधिना संस्कारयिष्ये ॥ इति सङ्कल्पः ॥

ततो वेदीदक्षिणस्यां दिशि वारिपूर्णकलशं ऊर्ध्वं तिष्ठतो कस्यचिद् मौनिनो ब्राह्मण-दृढपुरुषस्यस्कन्धे ऽभिषेक-पर्यन्तं धारयेत् ॥ ततो ब्रह्मवरणम् ॥

पाद्यादीनि समर्पयामि ॥ वासोऽङ्गुलीयकाऽऽसनमूल्योपकल्पितवरणद्रव्याय नमः॥ सम्पूज्य ॥ ॐ ब्राह्मणाय नमः । ततो वरः पूगीफलं गृहीत्वा ब्राह्मणस्य दक्षिणजानु आलभ्य वदेत् । ॐ अद्येत्यादि-अमुक गोत्रोऽमुक प्रवरान्वितः शुक्लयजुर्वेदान्तर्गत माध्यन्दिनीय शाखाऽध्यायी अमुकनाम शर्मा वरोऽहम्, ममास्या वध्वाः करिष्यमाणविवाहाङ्गीभूत --( द्विसप्ततिसङ्ख्याकघृताहुति)--कर्मणि कृताऽकृतावेक्षणरूपब्रह्मकर्मकर्तुमेतेन वरणद्रव्येणाऽमुकगोत्रममुकन्विरान्वितं शुक्ल यजुर्वेदान्तर्गत--माध्यप्रदनीय शाखा ऽध्यायिनममुकशर्माणं

ब्राह्मणं ब्रह्मत्वेन त्वामहं वृणे ॥ इत्युक्त्वा तां पूगीफलमर्पयेत् ॥ पूगीफलञ्च गृहीत्वा ब्राह्मणो वदेत्। ॐ वृतोऽस्मि ॥ ॐ व्रतेन दीक्षा माप्नोति० ॥ पाद्यार्घगन्धाक्षतपुष्पादिभिः सम्पूज्य हस्ते कङ्कणबन्धनम् ॥ "ॐ यदा बध्नन्दाक्षायणा० " ॥ वरो वदेत् ॥ यथा चतुर्मुखो ब्रह्मा, वेदशास्त्रविशारदः। तथा त्वं मम यज्ञेऽस्मिन् भव ब्रह्मा द्विजोत्तम ॥ यावत्कर्म समाप्येत, तावत्त्वं ब्रह्मा भव ॥ भवामीति प्रतिवचनम् ॥ 'यथाविहितं कर्म कुरु'—इति वरः ॥ 'करवाणीति' ब्राह्मणः ॥ "ॐ ब्रह्म जज्ञानम्प्रथमम्पुर०" ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्वा, तदुपरि प्रागग्रान् कुशानास्तीर्य, ब्रह्माणमग्निप्रदक्षिणक्रमेणानीयास्मिन् कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय, पूर्व कल्पितासने ब्रह्माणमुदङ्मुखमुपवेशयेत् ॥ अथाचार्यवरणं कुर्यात् ॥ ॐ अद्य कर्तव्य विवाह होम

कर्मणि कृताकृतावेक्षण–रूपाचार्य्यकर्म-कर्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवासोभिराचार्य्यत्वेनत्वा-महं वृणे ॥ तदाऽऽचार्य्यस्तु ॥ ओ३म् व्रतेन दीक्षामाप्नोति, दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति, श्रद्धया सत्यमाप्यते। तत आचार्याय तिलकं कुर्यात् ॥ 'ओ३म् गन्ध-द्वारां दुराधर्षाम्०' ततो दक्षिणादानम् ॥ आचार्यः 'वृतो ऽस्मीति, वदेत् ॥ इति आचार्यं वृत्वा। प्रणीतापात्रं सव्यहस्ते कृत्वा, वारिणा परिपूर्य, कुशैराच्छाद्य, ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः पश्चि-मासने निधायाऽऽलभ्य ततः पूर्वासने कुशो-परि निदध्यात् ॥ ततः परिस्तरणम् ॥[1] कुशचतुर्थभागमादायाऽऽग्नेयादीशानान्तम्, ब्रह्मणो ऽग्निपर्यन्तम्, नैर्ऋत्याद्वायव्या-

[1] 'अथ तृणैः परिस्तृणामि'-इस श्रुति से कुशों का परिस्तरण अग्नि की नग्नता दूर करने के लिए होता है। अतः अग्नि से ८ अंगुल दूर तक चौड़ाव में कुशों-द्वारा अग्नि-शोभार्थ है ॥

न्तम्, अग्नितः (२) प्रणीतापर्य्यन्तम् ॥ परिस्तीर्य ॥ अग्नेरुत्तरतः पश्चिमदिशिवा पवित्रच्छेदनार्थं कुशत्रयम्, पवित्रकरणार्थं साग्रमनंतगर्भं कुशपत्रद्वयम् (३) प्रोक्षणी-पात्रमाज्यस्थाली (४) सम्मार्जनीरूपकुशाः पञ्च, वेणीरूपोपयमनकुशाः सप्त, स्रुवः, आज्यं, पलाशसमिधस्तिस्रः, तण्डुलपूर्णपात्रं, एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणाऽऽसादनीयानि । तस्यामेव दिशि-शमीपलाशमिश्रिताः लाजाः, पालाशपत्र-द्वयम्, पेषणिकोपलम्, कुमारीभ्राता, शूर्पः दृढ़पुरुषः, उदकुम्भः (दधि, माष, तण्डुलाः, कार्पासवर्त्तिकाः ,दधिमोदकाः कटुतैलं, दर्पणः, चूडिकाः, दन्तपत्रिका, सिन्दूरम् कज्जलम्, विन्दिका, असाधारणमपिसौ-

२] प्रणीतापात्र वरना की लकड़ी का १२ अंगुल लम्वा, ४अंगुल चौड़ा, और ४ अंगुल मध्य में गड्ढे वाला होना चाहिए ॥ [३] प्रोक्षणीपात्र वरना की लकड़ी का १२ अंगुल लम्बा, हाथ के तलके बराबर हो ॥ [४] आज्यस्थाली का चरुस्थाली धातु वा मिट्टी की १२ अंगुल बीच से चौड़ी प्रदेशमात्र [बालिस्त भर] ऊँची होनी चाहिए ।

भाग्यद्रव्याणि) ॥ ततः ॥ पवित्रच्छेदन-कुशैः प्रादेशमितं पवित्रद्वयं (५) चिछत्वा सपवित्रदक्षिणकरेण प्रणीतोदकं त्रिः प्रो-क्षणीपात्रे निधाय, दक्षिणाऽनामिकांगुष्ठा-भ्यामुत्तराग्रपवित्रद्वयं गृहीत्वा, तेन प्रोक्ष-णीजलं त्रिरुत्पूय, प्रणीतोदकेन प्रोक्षणी-प्रोक्षणम्, पुनः प्रोक्षणीजलेनासादितवस्तु-सेचनं कृत्वाऽग्निप्रणीतयोर्मध्ये प्रोक्षणी-पात्रं निदध्यात् ॥ आज्यस्थाल्यामाज्य-निरूप्याऽधिश्रित्य । ज्वलत्तृणेन प्रदक्षिण-क्रमेण हविर्वेष्टयित्वा वह्नौ तत्प्रक्षिपेत् । स्रुवमधोमुखं (६) प्रतप्य, संमार्जनकुशा-नामग्रैरन्तरतो मूलैर्बाह्यतः संमृज्य, प्रणी-

(५)-छन्दोगपरिशिष्टे—अनन्तर्गभिण साग्रं, कौशं द्विदलमेव च प्रादेशमात्रं विज्ञेयं, पवित्रं यत्र कुत्रचित ॥१॥ दो-पत्तों की कुशा के एक ही पवित्र काटने का विधान है।

[६] स्रुक् स्रुव्-सोना-चांदी अथवा यज्ञीय-काष्ठके होने चाहियें। संक्षिप्त होम में छिद्र रहित ढाक अथवा पीपल के पत्तों का भी स्रुक् स्रुव् बन सकता है।

"वशिष्ठ-संहिता में

तोदकेनाभ्युक्ष्य, पुनः प्रतप्य, स्वदक्षिणतः कुशोपरि निदध्यात् ॥ आज्यमग्नेरवतार्य्यं प्रोक्षणीवदुत्पवनं कृत्वाऽवेक्ष्य च सत्यप-द्रव्ये तन्निरस्य प्रोक्षण्याः पुनरुत्पवनं कृत्वा, उपयमनकुशान् वामहस्तेधृत्वोत्तिष्ठन् प्रजापतिं (मसा) ध्यात्वा, तूष्णीं घृताक्ताः समिधस्तिस्रो जुहुयात् ॥ तत उपविश्य, सपवित्रप्रोक्षण्युदकेनेशानमारभ्येशानपर्यन्तं प्रदक्षिणक्रमेणाग्निं पर्य्युक्ष्य, प्रणीतापात्रे पवित्रं निधाय, वरः करौबध्वा देवताऽभिध्यानं करोति ॥ ततः पातितदक्षिण-जानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमे-योजक नामाऽग्नौ * स्रुवेणाऽऽज्योहुतीर्दद्यात् ॥ तत्राऽऽघारादारभ्य १२ द्वादशाहुतिपर्यंतं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ ॐ प्राजापत्यादिचतुर्णां मन्त्राणां प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो, म-

---

* स्रुवः-धारण-विधिः- तुर्यांगुलं परित्यज्य, षडंगुलमथापि वा । ...ेण मूलमाच्छाद्य, धारयेच्छंखमुद्रया ॥१॥

न्त्रोक्ता–देवता, आज्यहोमे–विनियोगः ॥
*ॐ प्रजापतये–स्वाहा ॥१॥इदं प्रजापतये,
न मम ॥ इति–मनसा । ॐ इन्द्राय–स्वाहा
॥२॥ इदमिन्द्राय, न मम ॥ इत्याघारौ ॥
ॐ अग्नये–स्वाहा ॥ ३ ॥ इदमग्नये ॥ ॐ
सोमाय–स्वाहा ॥ ४ ॥ इदं सोमाय इत्या-
ज्यभागौ ॥ तत्र व्याहृतित्रयस्य विश्वा-
मित्रज–मदग्निभृगव–ऋषयो, गायत्र्यु-
ष्णिगनुष्टुप्छन्दांसि अग्निवायुसूर्य्या-
देवता, व्याहृतिहोमे–विनियोगः ॥ ॐ भूः
स्वाहा ॥५॥ इदमग्नये, न मम ॥ ॐ भुवः
स्वाहा ॥६॥ इदं वायवे न मम ॥ ॐ स्वः
स्वाहा ॥७॥ इदं सूर्य्याय, न मम ॥ एता
महाव्याहृतयः ॥ अथ प्रायश्चित्तहोमः ॥
ॐ त्वन्नो० ॐ स त्वन्नो० इति–मन्त्रद्व-
यस्य वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्नि
वरुणौ देवते, प्रायश्चित्ताङ्गाज्यहोमे-विनि-

* कुण्ड का मध्यपार्श्व अग्नि-मुख कहाता है। इसी में हवन करना चाहिए ॥

योगः ॥ ॐ त्वन्नोऽअग्ग्ने व्वरुणस्य विद्वा-न्देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत्स्वाहा ॥८॥ इदमग्नीवरुणा-भ्यां, न मम ॥ ॐ सत्त्वन्नोऽअग्ग्ने वमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अव-यक्ष्व नो व्वरुणᳬ रराणो व्वीहि मृडीकᳬ सुहवो नऽएधि—स्वाहा ॥९॥ इदमग्नी-वरुणाभ्यां न मम ॥ ॐ अयाश्चाग्न-इति प्रजापतिर्ऋषिर्विराट्छन्दोऽग्निर्देवता, प्रा-यश्चित्तहोमे-विनियोगः ॥ ॐ अयाश्चाग्ग्ने स्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि । अयानो यज्ञं व्वहास्ययया नो धेहि भेषजᳬ स्वाहा ॥१०॥ इदमग्नये, अयसे न मम ॥ ॐ ये ते शतमिति-शुनःशेप ऋषिः, जगतीछन्दो वरुणादयः- देवताः, प्रायश्चि-त्तहोमे विनियोगः ॥ ॐ ये ते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।

तेभिर्नो ऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ ११ ॥ इदंवरुणाय, सवित्रे, विष्णवे, विश्वेभ्यो देवेभ्यो, मरुद्भ्यः, स्वर्केभ्यश्च, न मम ॥ ॐ उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दो, वरुणो देवता, प्रायश्चित्तहोमे-विनियोगः ॥ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यम ँ श्रथाय । अथाव्वयमादित्यव्रते तवानागसो ऽअदितये स्याम— स्वाहा ॥ १२ ॥ इदं वरुणायाऽऽदित्यादितये च न मम ॥ एताः प्रायश्चित्तसंज्ञकाः ॥ अतोऽग्रेऽन्वारब्धं विना ॥ ततः राष्ट्रभृद्धोमः । * ॐ ऋताषाडितिमन्त्राणां प्रजापतिर्ऋषिर्यजुश्छन्दो-मन्त्रलिंगोक्ता-देवता, आज्यहोमे—विनियोगः ॥ ॐ ऋताषाड् ऋतधामाऽग्निर्गन्धर्वः स न ऽइदम्ब्रह्म क्षत्रम्पातु तस्मै स्वाहाव्वाट् ॥ इदमृतासाहे,

* राष्ट्र के धारण पोषण की शक्ति उत्पन्न करने के कारण इसका नाम राष्ट्रभृत् कहा है । अन्वारब्धं त्यक्त्वा राष्ट्रभृद्धोमं कुर्यात् ।

ऋतधाम्नेऽग्नये, गन्धर्वाय न मम ॥१॥
ॐ ऋताषाड् ऋतधामाऽग्निर्गन्धर्वस्तस्यौ-
षधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा ॥
इदमोषधीभ्योऽप्सरोभ्यो, मुद्भ्यश्च न मम
॥२॥ ॐ स ँ हित-इति प्रजापतिऋर्षि-
र्यजुश्छन्दः, स ँ हितो विश्वसामा सूर्य्यो
गन्धर्वो देवता होमे—विनियोगः ॥ ॐ स
ँहितो विश्वसामा सूर्य्यो गन्धर्वः स नऽ-
इदम्ब्रह्म क्षत्रं पातु तस्मै स्वाहा—वाट् ॥
इद ँ स ँ हिताय विश्वसाम्ने, सूर्य्याय,
गन्धर्वाय, न मम॥३॥पुनः ॐस ँ हित-इति
प्रजापतिऋर्षिर्यजुश्छन्दः,मरीचयोऽप्सरस
आसुवो देवता, होमे-वि० ॥ ॐ स ँ हितो
विश्वसामा सूर्य्यो गन्धर्वस्तस्य मरीच-
योऽप्सरस ऽआयुवो नाम ताभ्यः स्वाहा ॥
इदं मरीचिभ्योऽप्सरोभ्य आयुभ्यो न मम
॥४॥ॐ सुषुम्ण-इति—प्रजापति—ऋषिर्य-
जुश्छन्दः, सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्ध-

र्वो देवता—होमे वि० ॥ ओ३म् सुषुम्णः सूर्य-रश्मिश्चन्द्रमा गन्धर्वः स न ऽइदम्ब्रह्म क्षत्रं पातु तस्मै स्वाहाव्वाट् ॥ इदं सुषुम्णाय सूर्यं रश्मये, चन्द्रमसे, गन्धर्वाय, न मम ॥५॥ पुनः ॥ ओ३म् सुषुम्णऽ-इति-प्रजापतिर्ऋषिर्यजुश्छन्दो, नक्षत्राण्यप्सरसो भेकुरयो देवता-होमे वि० ॥ ओ३म् सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा ॥ इदं नक्षत्रेभ्यो-ऽप्सरोभ्यो भेकुरिभ्यो न मम ॥६॥ ओ३म् इषिर-इति-प्रजापतिर्ऋषिर्यजुश्छन्दः, इषिरो विश्वव्यचा वातो गन्धर्वो देवता-होमे-वि० ॥ ओ३म् इषिरो व्विश्श्व व्यचा व्वातो गन्धर्व्वः सन ऽइम्ब्रह्मक्षत्रंपातु तस्मै स्वाहा व्वाट् ॥ इद-मिषिराय व्विश्श्व-व्यचसे वाताय गन्धर्वाय, न मम॥७॥पुनः-ओ३म् इषिर-इतिप्रजापतिर्ऋषिर्यजुश्छन्दः,-आपोऽप्सरस ऽऊर्जो देवता-होमे वि० ॥ ओ३म् इषिरो व्वि-

श्वव्यचा व्वातो गन्धर्वस्तस्यापोऽप्सरस
ऽऊर्जो नाम ताभ्यः स्वाहा ॥ इदमद्भयो
ऽप्सरोभ्य ऊर्ग्भ्यो,न मम॥८॥ॐभुज्युरिति
प्रजापतिर्ऋषिर्यजुश्छन्दः, भुज्युः-सुपर्णो
यज्ञो-गन्धर्वो-देवता-होमे वि० ॥ ॐ भुज्युः
सुपर्णो यज्ञो गन्धर्व्वः स न ऽइदंब्रह्म क्षत्रं
पातु तस्मै स्वाहा व्वाट् ॥ इदं भुज्यवे,
सुपर्णाय, यज्ञाय,गन्धर्वाय,न मम॥९॥पुनः
ॐ भुज्युरिति-प्रजापतिर्ऋषिर्यजुश्छन्दो,
दक्षिणाऽप्सरसस्तावा देवता-होमे वि० ॥ॐ
भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा-
ऽअप्सरसस्तावा नाम ताभ्यः स्वाहा ॥ इदं
दक्षिणाभ्यो ऽप्सरोभ्यस्तावाभ्यो, न मम
॥१०॥ ॐ प्रजापतिरिति-प्रजापति-ऋषि
र्यजुश्छन्दः,प्रजापतिर्विश्वकर्मा मनो गन्ध-
र्वो देवता,–होमे–वि० ॥ ॐ प्रजापति-
र्विश्शवकर्म्मा मनो गन्धर्वः स न ऽइदम्ब्रह्म
क्षत्रं पातु तस्मै स्वाहा व्वाट् ॥ इदं प्रजा-

पतये, विश्वकर्मणे, मनसे, गन्धर्वाय, न मम ॥११॥ पुनः ॥ ॐ प्रजापतिरिति प्रजापति-र्ऋषिर्यजुश्छन्दः, ऋक्सामान्यप्सरस एष्टयो देवता--होमे वि० ॥ ॐ प्रजापतिर्व्विश्वकर्म्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस ऽएष्टयो नाम ताभ्यः स्वाहा ॥ इदमृक्सामभ्योऽप्सरोभ्यः एष्टिभ्यो न मम ॥१२॥ इति राष्ट्रभृद्धोमः ॥ ततो दक्षिणा-दानम्॥ ॐ अद्येह अमुकशर्मा सवधूकोऽहं, कृतैतद्राष्ट्रभृद्धोमस्य साङ्गफलप्राप्तये साद्गुण्यार्थञ्चेमां दक्षिणाम्, आचार्यब्रह्मभ्यां विभज्य दास्ये ॥ ॐ तत्सत् ॥ ततः मन्त्रपाठः ॥ गन्धर्वाऽप्सरसश्चैव, प्रयच्छन्तु यशः श्रियम् ॥ दीर्घायुर्धनमारोग्यमुभयोः स्त्रीकुमारयोः ॥ इति ॥ (प्रणीतोदकेनात्र वधूवरयोर्मूर्धानमभिषिञ्चति) इति राष्ट्रभृद्धोमः ॥ अथ * जय होमः ॥ चित्तञ्चे-

* अन्यत्रपद्धतिषु 'जयाहोम' इत्येव लिखितः पाठो दृश्यते, तत्प्राज्ञैर्विचार्यम् ।

त्यादीनां द्वादशमन्त्राणां परमेष्ठी-ऋषि-र्यजूँषि चित्तादयो मन्त्राम्नाता देवताः, विजयार्थे, प्रतिमन्त्रहोमे-विनि० ।। ओ३म् चित्तञ्च स्वाहा, इदञ्चित्ताय न मम ।।१।। ओ३म् चित्तिश्च स्वाहा, इदञ्चित्त्यै न मम ।।२।। ओ३म् आकूतञ्च-स्वाहा, इदमाकूताय न मम ।।३।। ओ३म् आकूतिश्च स्वाहा-इदमाकूत्यै न मम।।४।।ओ३म् विज्ञातञ्चस्वाहा, इदं विज्ञाताय न मम ।।५।। ओ३म्विज्ञातिश्च-स्वाहा, इदं विज्ञात्यै न मम ।।६।। ओ३म् मनश्च स्वाहा-इदं, मनसे न मम ।।७।। ओ३म् शक्वरीश्च-स्वाहा, इदं शक्वरीभ्योः न मम ।।८।। ओ३म् दर्शश्च-स्वाहा, इदं दर्शाय न मम ।।९।। ओ३म् पौर्णमासञ्च—स्वाहा, इदं पौर्णमासाय न मम ।।१०।। ओ३म् बृहच्च-स्वाहा, इदम्बृहते, न मम ।।११।। ओ३म् रथन्तरञ्च-स्वाहा, इदं रथन्तराय न मम ।।१२।। पुनश्च ओ३म् प्रजापतिरिति-मन्त्रस्य

परमेष्ठी—ऋषिस्त्रिष्टुप्छन्दः, प्रजापतिर्देवता, जयाहोमे—विनि० ॥ ॐ प्रजापतिर्ज्जयानिन्द्राय व्वृष्णे प्रायच्छदुग्रः पृतना जयेषु ॥ तस्मै व्विशः समनमन्त सर्वाः स ऽउग्रः स ऽइ हव्यो बभूव स्वाहा—इदं प्रजापतये न मम ॥१३॥ (ततःप्रणीतोदकस्पर्शः(सङ्कल्प्य आचार्याय—दक्षिणां दद्यात्। पुनराचार्यः प्रणीतोदकेन-चिरञ्जीव्य महातेजश्चित्ताद्याश्च दिवौकसः। प्रयच्छन्तु करे वाञ्छामुभयोः स्त्रीकुमारयोः ॥ अभिषिंचेत् ॥ इति जयहोमः ॥ अथाऽभ्यातान होमः-ॐ अग्निर्भूतानामधिपतिरित्यादीनां पितरः पितामहा-इत्यन्तानामष्टादशमन्त्राणां प्रजापतिऋषिपंक्तिश्छन्दो, मन्त्राम्नाता अग्न्यादिदेवताः, प्रतिमन्त्रहोमे-विनियोगः ॥ ॐ अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म-

ण्यस्यां देवहूत्या ७ स्वाहा ॥ इदमग्नये, भूतानामधिपतये, न मम ॥१॥ ॐ इन्द्रो ज्येष्ठानामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदमिन्द्राय, ज्येष्ठानामधिपतये न मम ।२। ॐ यमः पृथिव्याऽअधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूता ७स्वाहा॥ इदं यमाय, पृथिव्याऽअधिपतये न मम ।३। (अत्र पित्र्यत्वात्प्रणीतोदकस्पर्शः) ॐ वायुरन्तरिक्षस्याऽधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्या७स्वाहा। इदं वायवेऽन्तरिक्षस्याधिपतये न मम ।४। ॐ सूर्य्यो दिवोऽधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूता ७

स्वाहा ॥ इद ७ सूर्य्याय, दिवोऽधिपतये न मम ॥५॥ ॐ चन्द्रमा नक्षत्राणामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदञ्चन्द्रमसे, नक्षत्राणामधिपतये, न मम ॥६॥ ॐ बृहस्पतिर्ब्रह्मणोऽधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्याँ देवहूत्या ७ स्वाहा ॥ इदं बृहस्पतये, ब्रह्मणोऽधिपतये न मम ॥७॥ ॐ मित्रः सत्यानामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्याशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदं मित्राय, सत्यानामधिपतये न मम ॥८॥ ॐ वरुणोऽपामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदं वरुणायापामधिपतये न

मम ॥९॥ ओ३म् समुद्रः स्रोत्यानामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदं समुद्राय, स्रोत्यानामधिपतये न मम ॥ १० ॥ ओ३म् अन्न ७ साम्राज्यानामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदमन्नाय, साम्राज्यानामधिपतये न मम ॥११॥ ओ३म् सोमऽओषधीनामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदं सोमायौषधीनामधिपतये, न मम ॥१२॥ ओ३म् सविता प्रसवानामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदं सवित्रे, प्रसवानामधिपतये,

न मम ॥१३॥ ॐ रुद्रः पशूनामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ᳪस्वाहा ॥ इदं रुद्राय, पशूनामधिपतये, न मम ॥१४॥ अत्र प्रणीतोदक स्पर्शः॥ ॐ त्वष्टा रूपाणामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यांपुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याᳪस्वाहा ॥ इदं त्वष्ट्रे, रूपाणामधिपतये न मम ॥१५॥ ॐ विष्णुः पर्वतानामधिपतिः स माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ᳪ स्वाहा ॥ इदं विष्णवे, पर्वतानामधिपतये न मम ॥१६॥ ॐ मरुतो गणानामधिपतयस्ते माऽवत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ᳪ स्वाहा ॥ इदं मरुद्भ्योगणानामधिपतिभ्यो, न मम ।१७।

ॐ पितरः पितामहाः परेऽवरे ततास्तता-
महाः इह माऽवन्त्वस्मिन् ब्रह्मण्यस्मिन्
क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्
कर्म्मण्यस्यां देवहूत्या ७ स्वाहा ॥ इदं
पितृभ्यः, पितामहेभ्यः, परेभ्योऽवरेभ्य-
स्ततेभ्यस्ततामहेभ्यो न मम ॥ १८ ॥
अत्र प्रणीतोदकस्पर्शः इत्याभ्यातानाम
होमः ॥ ॐ अद्येहेत्यादि-अमुकशर्मा सवधू-
कोऽहमभ्यातानहोमस्य साङ्गफलप्राप्तये,
साद्गुण्यार्थञ्चेमां दक्षिणामाचार्य्यब्रह्मभ्यो
विभज्य दास्ये ॥ तत आशीर्वादाः ॥ उत्सर्गे
च तुरीये च, प्रयच्छन्त्वनलादयः । पुत्राँ-
ल्लक्ष्मीं तथा कामानुभयोः स्त्रीकुमारयोः ॥
अथ अग्न्यादिपञ्चाङ्गहोमः ॥ ॐ अग्नि-
रैत्वित्यादीनां चतुर्णां मन्त्राणां प्रजापति-
ऋ॑षिस्त्रिष्टुप्छन्दो, लिङ्गोक्ता-देवता, आ-
ज्यहोमे-विनियोगः ॥ ॐ अग्निरैतु प्रथमो
देवताना ७ सोऽस्यै प्रजां मुञ्चतु मृत्युपा-

शात् । तदय ँ राजा व्वरुणो ऽनुमन्यतां यथेय ँ स्त्रीपौत्रमघन्न रोदात्-स्वाहा ॥ इदमग्नये न मम ॥१॥ ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुद्ध्यतामिय ँ स्वाहा ॥ इदमग्नये न मम ॥२॥ ॐ स्वस्ति नो ऽअग्ने दिव ऽआपृथिव्या व्विश्वानि धेह्य यथा यदत्र । यदस्या महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्र ँ स्वाहा ॥ इदमग्नये, न मम ॥३॥ ॐ सुगन्नु पन्थाम्प्रदिशन्न ऽएहि ज्ज्योतिष्मध्ये ह्यजरन्न ऽआयुः । अपैतु मृत्युरमृतन्न ऽआगाद्वैवस्वतो नोऽ अभयङ् कृणोतु—स्वाहा ॥ इदं वैवस्वताय, न मम ॥४॥ अत्र प्रणीतोदक स्पर्शः ॥ ततः ॥ वधूवरयोरन्त पटं दत्त्वा तूष्णीं जुहुयात् ॥ ॐ परं मृत्यविति सङ्कुसुक—ऋषिस्त्रिष्टुप्छन्दो, मृत्युर्देवता,

होमे-विनियोगः ॥ ॐ परं मृत्यो ऽअनुपरेहि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजा ᳪ रीरिषो मोत व्वीरान्-स्वाहा ॥ इदं मृत्यवे न मम ॥५॥ अत्र प्रणीतोदकस्पर्शः ॥

ततः पूर्ववद् दक्षिणां दत्वा आचार्यश्चाशीर्वादं दद्यात् ॥

ॐ गोविन्दो गोकुले तिष्ठन्, गोपीभिर्विहरन्मुदा तुष्टिपुष्टिकरो नित्यमुभयोः स्त्री-कुमारयोः ॥ अथ लाजाहोमः ॥

ततस्तिष्ठन्ती कुमारी अञ्जलिं विदधाति । वरश्चाऽनुपृष्ठं परिक्रम्योत्तरा ऽभिमुखो वध्वा दक्षिणतस्तिष्ठन्कुमार्यंञ्जलिं यथा समाचारमञ्जलिना दक्षिणहस्तेन वा ऽऽलभते ॥ तत्र कुमारी भ्राता शमीपलाशमिश्रलाजान् वारत्रयं कुमार्यञ्जलौ आवपति ॥ ततस्तान् कुमारी स्वहस्तेन वारत्रयं जुहोति ॥

ॐ अर्यमणमित्यादिमन्त्राणामाथर्वण-ऋषिरनुष्टुप्छन्द, अर्यमा-देवता,लाजाहोमे-वि० ॥ ॐ अर्य्यमणं देवं कन्या ऽअग्निमयक्षत । स नो ऽ अर्य्यमादेवः प्रेतो मुञ्चतु

मा पतेः-स्वाहा ॥ इदमर्यम्णे न मम ॥१॥
इति तृतीयांशहोमः ॥ ॐ इयं नार्य्युप-
ब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे
पतिरेधन्तां ज्ञातयो मम-स्वाहा ॥ इदमग्-
नये न मम ॥२॥ इत्यर्धांशहोमः ॥ ॐ इमाँ-
ल्लाजानावपाम्यग्नौ समृद्धिकरणं तव ।
मम तुभ्यञ्च संवननं तदग्निरनुमन्यतामिय
ᳬ स्वाहा ॥ इदमग्नये न मम ॥३॥ इति
सर्वांशहोमः अथवध्वा दक्षिणहस्तं सांगुष्ठ-
मुत्तानं वरो गृह्णाति ॥ ॐ गृभ्णामीत्या-
दीनां याज्ञवल्क्यभारद्वाजाथर्वण प्रजापतयः
ऋषयस्त्रिष्टुबुष्णिगनुष्टुबच्छन्दांसि, भगो-
ऽर्यमसवितृपुरन्ध्रयो देवता साङ्गुष्ठपाणि-
ग्रहणे विनि० ॥ ॐ गृभ्णामि ते सौभगत्-
वाय हस्तं मया पत्या जरदष्टिर्य्यथा सः ।
भगोऽअर्य्यमा सविता पुरन्धिर्मह्यन्त्वाऽदु-
र्गार्हपत्याय देवाः ॥१॥ अमोऽहमस्मि सा
त्व ᳬ सा त्वमस्यमो ऽ अहम् ॥ सामाहमस्मि

ऋक् त्वं द्यौरहं पृथिवी त्वम् ॥२॥ ॐ तावेव विवहावहै सह रेतो दधावहै । प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहून् ॥ ३ ॥ ॐ ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ । पश्येम शरदः शतञ्जीवेम शरदः शत ँ शृणुयाम शरदः शतम् ॥४॥

(अथैनामश्मानमारोहयतीति सूत्रम्) ॥

तद्यथा-अग्नेरुत्तरतः स्थापितेऽश्मनि वरो वध्वा दक्षिणं पादं स्वदक्षिणहस्तेन गृहीत्वा स्थापयेत् ॥

(वामहस्तेन तस्या वामस्कन्धञ्च स्पृशन् । पठति) ॐ आरोहेममित्यस्याऽथर्वण-ऋषिरनुष्टुप्छन्दो, वधूर्देवता, अश्मारोहणे-विनि० ॥ ॐ आरोहेममश्चानमश्मेव त्व ँ स्थिरा भव ॥ अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः ॥१॥ इति मन्त्रेण—आरूढायामेव तस्यां वरो गाथां गायति ॥ ॐ सरस्वतीति-विश्वावसुऋषिरनुष्टुप्छन्दः, सरस्वतीदेवता, गाथागाने-वि० ॥ ॐ सरस्वति

प्रेदमव सुभगे त्वाजिनीवति । यान्त्वा त्विश्वस्य भूतस्य प्रजायामस्याग्रतः । यस्यां भूत ँ समभवद्यस्यां विश्वमिदञ्जगत्। तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः ॥२॥ *इति गाथागानम् ॥ ततोऽग्रे वधूः पश्चाद्वरोऽग्निं प्रदक्षिणी कुरुतः तदा वर पठनीय मन्त्रः-ओ३म् तुभ्यमिति-अथर्वण-ऋषिरनुष्टुप्छन्दोऽग्निर्देवता, परिक्रमणे-

---

*आधवेन्द्रे यथा सीता, विनता कश्यपे यथा। पावके च यथा स्वाहा,तथा त्वं मयि भर्त्तरि ॥१॥अनिरुद्धे यथैवोषा दमयन्ती नलेयथा। अरुन्धती वशिष्ठे च,तथात्वं मयि भर्त्तरि ॥२॥ 'सुदक्षिणा दिलीपेतु,वसुदेवे च देवकी,लोपामुद्रा तथाऽगस्त्ये तथा त्वं मयि भर्त्तरि॥ ३ ॥-शन्तनौ च यथा गंगा,सुभद्रा च यथाऽर्जुने।धृतराष्ट्रे च गान्धारी,तथात्वं मयि भर्त्तरि ॥ ४ ॥ गौत्तमे च यथाऽहल्या द्रौपदी पाण्डवेषु च। यथा वालिनितारा च तथात्वं मयि भर्त्तरि ॥५॥ मंदोदरीरावणे च, रामेयद्वत्तु जानकी। पाण्डुराजे यथा कुन्ती, तथात्वं मयि भर्त्तरि ॥६॥ अत्रौ यथानुसूया च, जमदग्नौ च रेणुका। श्रीकृष्णे रुक्मिणी यद्वत्तथात्वं मयि भर्त्तरि ॥७॥संवरे तपनी यद्वद्भरते च शकुन्तला मेरुदेवी यथा नाभौ तथात्वं मयि भर्त्तरि॥८॥शुश्रूषस्व गुरून् कुरु प्रिय सखी वृत्तिं सपत्नी जने। भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः। भूयिष्ठं भव दक्षिणा परिजने, भोगेष्वनुत्सेकिनी। यान्त्येवं गृहिणी पदं युवतयो वामाः कुलस्या धयः ॥ १ ॥ पृथिव्या यानि रत्नानि, गुणवन्ति गुणान्विते। त्वं तान्याप्नुहि कल्याणि सुखिनी शरदां शतम् ॥२॥

**वि० ॥ ॐ तुभ्यमग्रे पर्य्यवहन्त्सूर्य्यां व्वहतुना सह । पुनः पतिभ्यो जायां दाऽग्ने प्रजया सह ॥ इति परिक्रमणम् ॥१॥**

ततोऽर्य्यमणमितिमन्त्रादारभ्य, तुभ्यमग्रे इतिमन्त्रान्तं, पूर्ववत्-लाज होमादि-परिक्रमणान्तं कुर्य्याद्विद्वः । अन्ते पुनः कुमारीभ्राता शमी एतेन ६ लाजाहुतयः, ३ साङ्गुष्ठ हस्त ग्रहणं, ३ गाथा गानं ३ प्रदक्षिणञ्च सम्पद्यते । पलाशमिश्रलाजान् शूर्पस्थान स्वाञ्जलिना कन्याञ्जलौ ददाति । सा च स्वाञ्जलिस्थेन 'ॐ भगायेति तिष्ठन्ती जुहोति ॥

**ॐ भगायेति'—प्रजापतिर्ऋषिर्यजुश्छन्दो, भगो-देवता, लाजाहोमे-वि० ॥ ॐ भगाय-स्वाहा, ॐ इदं भगाय ॥**

कन्यासर्वान्लाजाञ्जुहोति ॥ ततस्तूष्णी मग्रे वरः पश्चाद् वधूः कृत्वा चतुर्थपरिक्रमणम् ॥ उभौ चोपविश्य ॥

**ॐ प्रजापतय—इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः, प्रजापतिर्देवता, उत्तराङ्गहोमे-वि० ॥ ब्रह्मणाऽन्वारब्धः ॐ प्रजापतये स्वाहा ॥ इदं प्रजापतये न मम ॥ इति मनसा ॥ अथ सप्तपदी * ॥**

---

* लोकाचारानुसार पहिली तीन परिक्रमाओं में कुमारी आगे

पुनरुत्तरतः स्थापिते दृपदि दध्याक्तण्डुलमाषनिर्मितसप्तपुञ्जेषु. सप्तज्वलद्वर्तिकाः संस्थाप्य, प्रत्येकपुञ्जे सिलं विस्तारयन्, तदुपरि वधूदक्षिणपदंनिधाय, तत्र—स्वदक्षिणहस्तं वरो निधाय, वामहस्तेन तस्या वामस्कन्धं स्पृशन् प्रत्येकं पुञ्जं प्रेषयन् प्रत्येकं मन्त्रं पटेत्—इयमेव सप्तपदी ॥

**अथ कन्यासप्तवाक्यानि ॥ तत्र प्रथमपदे मन्त्रः—"विनियोगस्तु सप्तानामेक एव" ॐ एकमिषेत्यादीनां प्रजापतिर्ऋषिर्यजुश्छन्दः लिङ्गोक्ता देवता, सप्तपदीप्रक्रमणे—विनि० ॥ * ॐ एकमिषे विष्णुस्त्वा**

---

और वर पीछे होता है इसमें संस्कारभास्कर-कारका वचन है कि "अग्रे तु शुभदा पत्नी मांगल्ये सर्वकर्मणि"। चौथी परिक्रमा में वर आगे कन्या पीछे होती है ॥ त्रिः परणीतां प्रजापत्यं हुत्वा अथैनामुदोचीं सप्तपदानि प्रक्रामयति। इन सूत्रोंके प्रमाण से तीनही परिक्रमा सूत्रकार को अभिमत हैं ॥ यहाँ उत्तर दिशा सोम्य होने से ज्ञानवृद्धि की उपलक्षिका है और पद शब्द चरणार्थ के अतिरिक्त व्यवसाय त्राण स्थानादिक भी वाचक है। अतः स्त्री गृहस्थाश्रम को सुखमय बनाने के लिए ७ पद अर्थात् सात प्रकार के व्यवसाय अथवा न्यायशास्त्रोक्त द्रव्य गुण आदिक द्रव्योपार्जन रूप उपलक्ष्य है। जिसे जातीयहित ईश्वर-भक्ति के साथ २ त्रिविध तापोपशमन होकर, अन्न बलादिकों की अभिवृद्धि प्राप्त हो।

* इन 'एकमिषे- द्वे ऊर्जे' आदिक सातों मन्त्रों का अर्थ मुझसे कतिपय महानुभाव पूछते आये हैं अतः क्रम से उन सातों मन्त्रों का

नयतु ।।१।। ॐ द्वे ऊर्जे विष्णुस्त्वा नयतु ।।२।। ॐ त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु ।।३।। ॐ चत्वारि मायो भवाय विष्णुस्त्वा नयतु ।।४।। ॐ पञ्च पशुभ्यो विष्णुस्त्वा नयतु ।।५।। ॐ षड् ऋतुभ्यो विष्णुस्त्वा नयतु ।।६।। ॐ सखे सप्तपदा भव, सा मामनुव्रता भव, विष्णुस्त्वा नयतु ।।७।। (अथ वाक्यचतुष्टयम्) ।। उद्याने मद्यपाने च, पितुर्गेह गमनेन च । आज्ञाभङ्गो न कर्तव्यो, वर वाक्य चतुष्टयम् ।१।

अर्थात्-वाग बगीचे जंगल आदि स्थानों में तुम अकेली

---

अर्थ सर्वसाधारणों के सुलभार्थ यहाँ पर दे रहे हैं=यथा १ सर्व व्यापक ईश्वर मुझे एक पद अन्न के लिये चलाए। २ दूसरा पद, विष्णु बल के लिए तुझे चलाये। ३ तीसरा पद, धन वृद्धि के लिए विष्णु तुझे चलावे। ४ चौथा पद, आरोग्य के अर्थ विष्णु तुझे चलावे। ५ पांचवा पद, पशुओं के लिए विष्णु तुझे चलाये। ६ छटा पद, ऋतुओं के लिए तुझे चलाए। ७ सात पद वाली हो अर्थात्-पतिव्रत धर्म से भूः आदिक सात लोकों में अरुन्धती जानकी आदि के समान प्रख्यातहो यह तू मेरे अनुकूल बर्तने वालीहो विष्णु तुझे चलाए। यह अन्तिम मन्त्र का भाव हुआ। श्लोकों का अर्थ भी आचार्य दोनों को समझा देवे ।। इति ।।

ऊपर लिखित श्लोकों का अभिप्राय आचार्य दोनों को समझावे।

मत जाना ॥१॥ मदिरा-पान किये हुए मतवाले वा पागल पुरुषों के सामने कदापि खड़ी न होना ॥२। पिता के घर मेरी आज्ञा लिए बिना कभी न जाना ॥३॥ और मेरी आज्ञा का कभी उल्लंघन न करना, यह तुम वचन दो, तो मैं तुम्हें वामांग में बिठाऊँ ॥४॥ इति ।

ततः सप्तमं पुञ्जं घृतपूरितदीपे निधाय, परिक्रमणं कृत्वाग्नेः पश्चादुपविश्य पुरुष स्कन्धस्थित कुम्भाज्जलं गृहीत्वाम्रपल्लवेन वरो वधूमूर्ध्नि कुम्भस्थजलेनाभिषिचति।

ॐ आप इति प्रजापतिऋर्षिर्यजुश्छन्दः, आपो देवता वधूमूर्धाभिषेचने-विनियोगः॥ ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥ १ ॥ ॐ आपो हिष्ठा०' ॥२॥ पुनः वरो वधूं सूर्यमुदीक्षस्वेति वदेत् ॥ ॐ तच्चक्षुरिति दध्यङ्ङाथर्वणऋषिर्ब्राह्मीत्रिष्टुप्छन्दः, सूर्य्यो देवता,सूर्योदीक्षणे—विनियोगः ॥ ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शत ँ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ।

(अस्तमिते सूर्ये ध्रुवमुदीक्षस्वेति वदेत् ॥ ॐ ध्रुवमसीति-प्रजापतिॠषिः, पंक्तिः छन्दः ध्रुवो देवता,ध्रुवदर्शने-विनियोगः ॥ ॐ ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि-पोष्यो मयि । मह्यं त्वा ऽदाद्बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शरम्) ।

ततो वरो हृदयमालभते ॥ ॐ ममेतिप्रजा-पतिॠषिस्त्रिष्टुप्छन्दः, प्रजापतिर्देवता, वधूहृदयालम्भने–विनि० ॥ ॐ मम व्व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽ-अस्तु ॥ मम व्वाचमेकमना जुषस्व प्रजाप-तिष्ट्वा नियुनक्तु मह्यम् ॥

ततो वधू-शिरसि हस्तं धृत्वा वरोऽभिमन्त्रयते–

ॐ सुमङ्गलीरिति–प्रजापतिॠषिरनुष्टु-प्छन्दो, लिंगोक्ता देवता, वध्वभिमन्त्रणे–वि० ॥ ॐ सुमङ्गलीरियं वधूरिमा ँ समेत पश्यत । सौभाग्यमस्यै दत्वा याथास्तं विपरेतन ॥

इति वधूवरौ परस्परं तैलाभ्यङ्ग-केशसंमार्जन- सिंदूर-तिलक-चूडिकाऽऽदर्श-कज्जलधारण-दधिप्राशन-परस्परोच्छिष्टलापनान्तकर्माणि कुरुतः ॥ ततो वरो वधूं स्ववामभागे समुपवेशयति स्त्रीणां स्थितिर्वामपार्श्वे, दक्षिणे त्वं कथं स्थिता। मया विवाहिता दत्ता, तव पित्रा च बन्धुभिः ॥१॥ उत्तिष्ठ वामभागं मे, पत्नीभावं भज प्रिये ! यत्किञ्चित्तव चित्तेऽस्ति, तद् वदस्व ममाग्रतः ॥२॥ तत्र वरस्य वामभागे उपविष्टा कन्या वरं प्रति प्रतिज्ञावचनानि ब्रूते ॥

न दानेन विवाहोऽस्ति, लाजाहोमेन नैव हि। विवाहस्तु स्तदाज्ञेयो, यदा सप्तपदी-क्रमः ॥१॥ सन्ति मे सप्तवाक्यानि, त्वया ग्राह्याणि सर्वदा। पालनीयानि यदि ते, वामाङ्गं संभजाम्यहम् ॥२॥ कन्योवाच ॥ ॐ तीर्थव्रतोद्यापनयज्ञदानं, मया सह त्वं यदि कान्त ! कुर्याः। वामाङ्गमायामि तदा त्वदीयञ्जगाद वाक्यं प्रथमं कुमारी ॥१॥ हव्यप्रदानैरमरान्पितृँश्च, कव्यप्रदानैर्न-यदि पूजयेथाः। वामाङ्गमायामि तदा त्व-दीयञ्जगाद कन्या वचनं द्वितीयम् ॥२॥

कुटम्बरक्षाभरणे यदि त्वं, कुर्याः पशूनां परिपालनञ्च। वामाङ्गमायामि तदा त्वदीयञ्जगाद कन्या वचनं तृतीयम् ॥ ३ ॥ आयव्ययौ धान्यधनादिकानां, पृष्ट्वा निवेशञ्च गृहे निदध्याः। वामाङ्गमायामि तदा त्वदीयञ्जगाद कन्या वचनञ्चतुर्थम् ॥४॥ देवालयाऽऽरामतडागकूपवापीर्विदध्याः यदि पूजयेथाः। वामांगमायामि तदा त्वदीयञ्जगाद कन्या वचनञ्च पञ्चमम् ॥५॥ देशान्तरे वा स्वपुरान्तरे वा, यदा विदध्याः क्रयविक्रयौ त्वम्। वामांग० जगाद कन्या वचनं च षष्ठम् ॥६॥ न सेवनीया परकामिनी त्वया, न राग दृष्ट्या च विलोकनीया। वामांगमायामि तदा त्वदीयं जगाद कन्या वचनञ्च सप्तमम् ॥७॥ ततो वर उवाच ॥ मदीयचित्ताऽनुगतञ्च चित्तं, सदा ममाज्ञा परिपालनञ्च। पतिव्रता धर्मपरायणा त्वं, कुर्या सदा सर्वमिमं

प्रयत्नत् ॥१॥ इति मिथः प्रतिज्ञाय ॥ ॐ इहेति–प्रजापतिर्ऋषिरनुष्टुप्छन्दो, लिंगोक्ता–देवता, वधूपवेशने विनि० ॥ ॐ इह गावो निषीदन्त्विहाश्वा ऽइह पूरुषाः। इहो सहस्रदक्षिणो यज्ञऽइह पूषा निषीदतु ।इति। परिकरमाकृष्योपविश्य । × ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते ॥

ततः संश्रवं प्राश्य, आचम्य, पवित्राभ्यांमार्जनम्। अग्नौपवित्र प्रतिपत्तिः ॥ पूर्णपात्रं ब्रह्मणे दद्यात् ॥

ॐ अद्येत्यादि० अमुकोऽहं सवधूकः कृतैतद्विवाहांगभूतहवनकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मणः सांगतासिद्धये इदं सदक्षिणं पूर्णपात्रंब्रह्मणे तुभ्यं सम्प्रददे ॥ ॐ स्वस्तीति ॥ ब्रह्मा वदेत्।

* पुरतः प्रणीतापात्रं न्युब्जी कुर्यात्'' ततः 'ॐ आपः

× शोभनप्रकार से मनोरथों को पूर्ण करने वाले देवता का नाम स्विष्टकृत् है।

* विवाहे व्रतवन्धे च शालायां चोलकर्मण गर्भाधानादि संस्कारे पूर्णाहुति न कारयेत् ॥ [ गोभिल गृ० भाष्य से ] सिद्ध है कि यहां पूर्णाहुति नहीं होनी चाहिये केवल त्र्यायुषकरण तिलक

शिवाः शिवतमाः०'-इतिमन्त्रेणोपयमन कुशैर्माजनम् । तत-स्त्र्यायुषकरणम् ।। स्त्रुवेण भस्मानीय दक्षिणानामिकयाऽग्रहीतभस्मना--

**ॐ त्र्यायुषं जमदग्नेरिति--ललाटे । ॐ कस्यपश्य त्र्यायुषं ग्रीवायाम् ।। ॐ यद्देवेषु त्र्यायुंषम् दक्षिणांसे । ॐ तन्नो ऽअस्तु त्र्यायुषमिति हृदि ।।**

ततो भूयसीदक्षिणादानम् ।। स्कन्धकलशाय दक्षिणादानमञ्चलमोक्षणम्, चतुर्थ्यन्ते तु--कङ्कणं मोचयाम्यद्य रक्षांसि न कदाचन ।। मयि रक्षां स्थिरां दत्त्वा, स्वस्थानं गच्छ कङ्कण ! ।। ततो गोदान कृत्वा, गणपत्यादिकावाहितदेवताविसर्जनं विधाय, ब्राह्मणद्वाराऽभिषेक--मन्त्रपाठतिलकादीनि वंधू वरौ गृह्णीतः ।। मण्डपोद्वासनं कृत्वा, आचारात्--

## सम्बन्धियों को आमन्त्रणश्लोकाः

**विद्या वृत्तियुताः प्रसन्न हृदया विद्वत्सु-**

---

अभिषेक रक्षा सूत्र बन्धनादिक करें पूर्णाहुति नहीं क्योंकि यही अग्नि-चतुर्थी कर्म के होम के लिये सुरक्षित रखना चाहिये इसी कारण यहां विसर्जन नहीं होता है। देशाचार से इसी अवसर पर वसिष्ठाऽरुन्धती-पूजन भी वधू करती है। देशाचार से चतुर्थी इसी अवसर पर भी करते हैं। कन्यादान होने पर ही गोदान करना अत्यावश्यक है।

भो सम्बन्धिन् ! जिस उज्ज्वल कुल में आप जैसे गुण-निधि

बद्धादराः, श्रीनारायणपादपद्मयुगलध्या-
नावधूतांहसः ॥ श्रौताचारपरायणाः सवि-
नया विश्वोपकारक्षमा, जाता यत्र भवा-
दृशास्तदमलं, केनोपमेयकुलम् ॥१॥ पृथ्वी
तावदियं महत्सु महती, तद्वेष्टनं वारिधः,
पीतोऽसौकलशोद्भवेन मुनिना, स व्योम्नि
खद्योतवत् ॥ तद्विष्णोर्दनुजाधिनाथद
मने, पूर्णं पदं नाभवद्देवोऽसौ वसति
त्वदीयहृदये त्वत्तोऽधिकः को महान् ॥२॥

## चतुर्थी कर्म विधिः

विवाहदिनाच्चतुर्थेहनि रात्रौ गृहाभ्यन्तर एव वरो वद्
ध्वा सहोद्वर्तनपूर्वकं समङ्गलं स्नात्वाऽहतपट्टादिवाससी

---

सत्पुरुष उत्पन्न हुए हैं, उस पवित्र-कुल की उपमा हम किससे दें? आपकी विद्या उपजीविका मे युक्त है एव आप स्वयं प्रसन्न-हृदय और निष्कपट अन्तःकरण वाले हो विद्वानों द्वारा आदरणोय होते हुए धर्माचारो, विश्वोपकारी एवं निरन्तर ईश्वराराधन द्वारा भगवत्कृपा-पात्र हो। श्रीमन्! प्रथम तो यह पृथ्वी सबसे बड़ी है, फिर उसे समुद्र ने चारों ओर से घेर रक्खा है, अतः समुद्र ही बड़ा हुआ, पृथ्वी नहीं। उस समुद्र को मुनिराज-अगस्त्य जी तीन आचमन द्वारा पी गये। तो फिर समुद्र बड़ा नहीं हुआ अगस्त्य जी ही बड़े हुए। वही अगस्त्य का तारा आकाश में एक खद्योतवत् ( पटबीजना-

परिधाय' गृहं प्रविश्य धृतकुङ्कुमतिलको वेदिसमीपे शुभासने चोपविश्य, आचम्य, प्राणानायम्य गणेशवरुणौ सम्पूज्य-

**अमुकोऽहं ममास्या वध्वाः सोमगन्धर्वाऽग्न्युपभुक्तदोषपरिहारार्थं विवाहव्रतसमाप्तिविहितं चतुर्थीकर्म करिष्ये।**

इति-सङ्कल्प्य ॥ कांस्यपात्रोपनीतमग्निं पञ्चभूसंस्कारपूर्वकम्, 'ॐ अग्निदूतमिति' मन्त्रेण-संस्थाप्य, पुष्पचन्दनताम्बूलवस्त्राण्यादाय--

**ॐ अद्येत्यादि० अमुकोऽहं कर्तव्यचतुर्थीहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुमेभिः पुष्पचन्दनादिभिरमुकशर्म्माणं ब्राह्मणं त्वां ब्रह्मत्वेन * वृणे ॥**

इति ब्रह्मणं वृत्वा कुशकण्डिकां यथोक्तां कृत्वा। तन्मध्ये विशेषः। प्रणीता-स्थानादुत्तरतस्ताम्राद्युदपात्रमग्न्यादि

---

की तरह ) दिखाई देते हैं, तो अगस्त्य जी भी क्या बड़े रहे ? आकाश ही बड़ा रहा। फिर उस आकाश को भगवान ने वामन-अवतार धारण कर बलि दमन के समय एक पद में ही माप लिया, तो भगवान् बड़े हुए। वही पुरुषोत्तम भगवान आपके हृदय में बसते हैं, अतः अब हम किससे आपकी तुलना करें। आपसे बढ़कर कौन है ? कोई नहीं ॥ २ ॥

* यदि विवाह के होम का वरण किया हुआ ब्रह्मा हो तो वरण करें, अन्यथा नहीं।

प्रधानाऽऽहुति संस्रवधारणार्थं प्रतिष्ठापयेत् ॥

ततो मनसा प्रजापतिं ध्यात्वा, तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रो जुहुयात् ॥ तत उपविश्य सपवित्र प्रोक्षण्युदकेनाग्निं तूष्णीं पर्युक्ष्य प्रणीतापात्रे पवित्रे स्थाप्य ब्रह्मणान्वारब्धः पातित दक्षिणजानुः समिद्धतमे ऽग्नौ स्रुवेणाज्याहुतीर्जुहुयात् । तत्राघारादारभ्याहुति चतुष्टये हुतशेषस्य प्रोक्षणी पात्रेत्यागः ॥ ॐ प्रजापत्यादिचतुर्णां मन्त्राणां—प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो, मन्त्रोक्ता—देवताः, आज्यहोमे—वि० ॥ ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम ॥ इति मनसा । ॐ इन्द्राय स्वाहा, इदमिन्द्राय इत्याघारौ ॥ ॐ अग्नये स्वाहा—इदमग्नये न मम ॥ ॐ सोमाय स्वाहा—इदं सोमाय न मम ॥ इत्याऽऽज्य भागौ ॥

आहुति पञ्चतये नान्वारब्धः ।

(स्थालीपाकहोमः ।)अग्नये प्रायश्चित्त-

इति पञ्चानां परमेष्ठी ऋषिस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवताः स्थाली पाकहोमे विनि० ॥ ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथ काम उपधावामि यास्यै पतिघ्नी तनूस्तामस्यै नाशय-स्वाहा। इदमग्नये ॥ १ ॥ प्रणीतापात्रा दुत्तरतः स्थापित प्रोक्षण्याः जलपात्रे संस्रव-प्रक्षेपः पञ्चाऽऽहुतीनाम् ॥ पुनस्तद्वत् ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय—स्वाहा इदं वायवे न मम ॥२॥ उदपात्रे ॥ ॐ सूर्य्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा इदं सूर्य्याय न मम ॥३॥ उदपात्रे ॥ ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी

तनूस्तामस्यै नाशाय स्वाहा । इदं चन्द्रमसे न मम ॥४॥ उदपात्रे ॥ ॐ गन्धर्व्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय–स्वाहा ॥ इदं गन्धर्वाय न मम ॥५॥ उदपात्रे अन्वारब्धः स्थालीपाकमाज्येनाऽभिघार्य स्रुवेणादाय मनसा प्रजापतिं ध्यात्वा जुहोति ॥ ॐ प्रजापति ऋषिस्त्रिष्टुप्छन्दः प्रजापत्यग्नी-देवते, उत्तराङ्गहोमे विनियोगः ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

अनन्तरं स्रुवेणैवा ऽऽज्य चरुं गृहीत्वा, ब्रह्मणाऽन्वारब्ध–पूर्वकं स्विष्टकृतं जुहुयात् ॥

ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम ॥

अयमेव स्विष्ट कृद्धोमः ॥ तत आज्येन भूराद्या नवाहुतीः दद्यात् ॥

तत्रच व्याहृतित्रयस्य विश्वामित्र जम-

दग्निभृगव—ऋषयो, गायत्र्युष्णिगनुष्टुभ-
श्छन्दांसि, अग्निवायुसूर्या-देवता, व्याहृति-
होमे—वि० ॥ ॐ भूः स्वाहा, इदमग्नये ॥
ॐ भुवः स्वाहा, इदं वायवे ॥ ॐ स्वः
स्वाहा, इदं सूर्य्याय ॥ ॐ अग्निं प्रज्वलितं
वन्दे, हुताशं जातवेदसम् । सुवर्णवर्णमनलं,
समिद्धं सर्वतोमुखम् ॥ ॐ त्वन्नोऽग्न-इत्य-
स्य वामदेवऋषिस्त्रिष्टुप्छन्दः, अग्नीवरुणौ
देवते, प्रायश्चित्तहोमे—वि० ॥ ॐ त्वन्नो-
ऽअग्ने व्वरुणस्य व्विद्वान् देवस्य हेडो ऽअ-
वया सिसीष्ठाः । यजिष्ठो व्विह्नितमः शोशु-
चानो व्विश्श्वा द्वेषा ᳪ सि प्रमुमुग्ध्यस्मत्-
स्वाहा ॥ इदमग्नी वरुणाभ्याम् न मम ॥
ॐ स त्वन्नो ऽअग्ने वमो भवोतीनेदिष्ठो-
ऽअस्या ऽउषसो व्युष्टौ । अवयक्ष्वोनो व्वरुण
ᳪ रराणो व्वीहि मृडीक ᳪ सुहवो न ऽएधि-
स्वाहा ॥ इदमग्नीवरुणाभ्याम् न मम ॥
ॐ अयाश्चाग्ने—इति—प्रजापतिऋषिर्वि-

राट् छन्दोऽग्निर्देवता, होमे-विनि० ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि ॥ अया नो यज्ञम्वहास्ययानो धेहि भेषज ँ स्वाहा—इदमग्नये अयसे न मम ॥ ॐ ये ते शतमिति—शुनःशेपऋषिर्जगतीछन्दो, वरुणसवितृविष्णुविश्वेदेवा मरुतः स्वर्का देवताः, प्रायश्चित्तहोमे—वि० ॥ ॐ ये ते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत व्विष्णुर्व्विश्श्वे मुञ्चन्तु मरुतः स्वर्क्काः-स्वाहा । इदं वरुणाय, सवित्रे, व्विष्णवे, विश्वेभ्यो देवेभ्यो, मरुद्भ्यः, स्वर्केभ्यश्च न मम ॥ ॐ उदुत्तममिति—शुनःशेपऋषिस्त्रिष्टुप्छन्दो, वरुणादितीदेवते, प्रायश्चित्तहोमे—वि० ॥ ॐ उदुत्तमं व्वरुण पाशमस्मदवाधमं व्विमद्ध्यम ँ श्रथाय । अथा व्वयमादित्यव्रते तवानागसो ऽअदितये स्याम—स्वाहा ॥ इदं वरुणायादित्या-

यादित्यै च न मम ।। ॐ प्रजापतये—स्वाहा, इदं—प्रजापतये न मम ।। ततः संस्रवं प्राश्य आचम्य, पवित्राभ्यां मार्जनम्, अग्नौ पवित्रप्रतिपत्तिः ।। पुनः सदक्षिणातण्डुलपूर्णपात्रं सम्पूज्य, ॐ ब्राह्मणाय नमइत्यपि—सम्पूज्य ।। ब्रह्मणे—पूर्णपात्रदानम् ।। तत्र सङ्कल्पः ।। ॐ अद्येह अमुकशर्म्मा सपत्नीकोऽहं कृतस्यास्य—चतुर्थीकर्मांगहोमकर्मणः सांगतासिद्ध्यर्थं, इदं पूर्णपात्रं सद्रव्यं तुभ्यं सम्प्रददे ।। 'स्वस्तीति'—प्रतिवचनम् ।।

ततः पूर्वस्थापितकलशादुदकमादाय वरो वधूमभिषिञ्चति ।

ॐ आपः शिवा० पुनः-ॐया त इति-प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो, वधूर्देवता, अभिषेचने वि० ।। ॐ या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निंदिता तनूर्जारघ्नी तत ऽएनां करोमि । साजीर्य्य त्वं मया सह ।। श्रीमत्यमुकी देवि! इत्यन्तेन मन्त्रेण ।।

अत्रैव वध्वा "आचारप्राप्तं वर्णाक्षराऽनुकूलं द्वितीयं नामकरणयुक्तम्" ॥ ततः ॐ सुमित्रिया न० ।

इति मन्त्रेण शिरसि किञ्चिज्जलमभिषिञ्चेत् । तथा-'दुर्मित्रिया'० इति मन्त्रेणैशान्यां प्रणीतान्युब्जीकरणम् ॥ ततः परिस्तरणक्रमेणाऽऽज्याभिघारितं बर्हिर्गृहीत्वा ॥

ॐ देवा गातुइति—अत्रिर्ऋषिरुष्णिक्छन्दो, मनस्पतिर्देवता, बर्हिर्होमे विनियोगः ॥ ॐ देवा गातु विदो गातुं वित्वा गातुमित । मनसस्पत ऽइमं देवयज्ञ ँ स्वाहा वातेधाः स्वाहा ॥ अथ वरो वधूं हुतशेषं स्थालीपाकं प्राशयति सकृत् ॥ ॐ प्राणैस्त इति प्रजापतिर्ऋषिर्यजुश्छन्दो, वधूर्देवता, स्थालीपाकप्राशने—वि० ॥ ॐ प्राणैस्ते प्राणान् सन्दधामि ॥१॥ ॐ अस्थिभिरस्थीनिसन्दधामि ॥२॥ मा ँ सैर्मा ँ सानि सन्दधामि ॥३॥ ॐ त्वचा ते त्वचं सन्दधामि ॥४॥ आचारात् ग्रासपञ्चकं

तूष्णीं वधूं प्राशयेत् वरः ॥ अत्राऽवसरे वध्वा दक्षिणस्कन्धस्योपरि स्वदक्षिणभुजस्य पाणितलं निधाय, मन्त्रं पठन् हृदयं स्पृशति—ॐ यत्त—इति—प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दो, हृदयं देवता, हृदयाऽऽलम्भने विनियोगः ॥ ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितं। व्वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतञ्जीवेम शरदः शत ँ शृणुयाम शरदः शतम् ॥

ततः पूर्णाहुति ॥ वरो वध्वा सह उत्थाय, स्रुवस्थघृताक्तफलं दक्षिणहस्ते निधाय।

'ॐ पूर्णादर्वीति'—पूर्णनाभऋषिरनुष्टुप्छन्दोऽग्निर्देवता, पूर्णाहुतिहोमो—वि० ॥ ॐ पूर्णा दर्व्वि परापत० इति शिखिनामग्नौ पूर्णाहुतिं विधाय, ॐ त्र्यायुषमिति-नारायणऋषिरुष्णिक् छन्दः, शिवो—देवता, त्र्यायुषकरणे विनियोगः ॥ * ॐ त्र्यायुष-

* वधू को विवाह-दिन में ही त्र्यायुष [भस्मी] दियाजाता है फिर नहीं

**ञ्जमदग्नेरिति-ललाटे ॥ ॐ कश्यपस्य त्र्यायुषमिति-ग्रीवायाम् ॥ ॐ यद्देवेषु त्र्यायुषमितिदक्षिणबाहुमूले । तत्तेऽअस्तु त्र्यायुषमिति हृदि ।**

इति त्र्यायुषं कृत्वा अञ्चलग्रन्थिं कङ्कणञ्चमोचयेदाचारात्' । *कङ्कणं मोचयाभ्यह०' इति, दक्षिणाभूयसीतिलकमन्त्रपाठाश्च ॥

## ❀ अथ द्विरागमनविधिः ❀

चरेदथौजहायने घटालिमेखगे रवौ० इत्यादि शुभेह्नि फेणिकादिकं पाचयित्वा पेटिकायां निधाय, शिविकाद्यं यानमारुह्य, श्वशुरगृहं गत्वा, श्वशुरावभिवन्द्य, तत्कृतार्चां स्वीकृत्य, भोजनं विधाय, आदौ गणपतिं ध्यात्वा, शुभे लग्ने वधूं प्रस्थाप्य, श्वशुरावभिवन्द्य, ताभ्यां कृततिलकः पुरस्कृततद्दत्तयौतुकः सवधूको निजगृहमागत्य स्वदेशरीत्या देहलीसमीपे मिथोऽञ्चलग्रन्थिं सम्पाद्य, स्वासने समुपविश्य, स्ववामभागे पृथक्-पीठे वधूमुपवेश्य, आचभ्य, अर्घं संस्थाप्य, प्राणानायम्य, सङ्कल्पं कुर्यात् ॥

**ॐ अद्येह अमुकशर्म्मा सपत्नीकोऽहं, मम द्विरागमनाङ्ग-गृहप्रवेशकर्मणि श्रीगणपते-**

---

* कुछ विद्वान प्रचलन से इसी समय ही अञ्चल-ग्रन्थि-कंकण मोचन कराते हैं ।

द्वारमातृ्णाञ्च पूजनं करिष्ये ॥

इति संकल्प्य, यथाविधि गणेशं द्वारमातृ्श्च सम्पूज्य, लग्नदानं कुर्यात् ।

अद्येह—अमुकशर्म्मा सपत्नीकोऽहं मम द्विरागमनाङ्गगृहप्रवेशलग्नाद्यत्र कुत्रस्थानस्थितानामादित्यादिनवग्रहाणां शुभानां शुभफलाधिक्यप्राप्तये, दुष्टानां दुष्टदोषोपशान्त्यर्थमिदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा पुरोहितदैवज्ञादिब्राह्मणेभ्यो दातुमहमुत्सृजे॥

ॐ तत्सन्नममेति संकल्प्य, दक्षिणां दत्वा, स्वस्तिवाचनपुरः सरं गृहं प्रविश्य, भित्ति लिखितजीवमातृ्णां सविधे गत्वा, विधिवत्ताः सम्पूज्य, आचारात् कलशं संस्थाप्य, वध्वा सम्वृतः प्रदक्षिणीकृत्य, दक्षिणासंङ्कल्पं कुर्यात् ॥

ॐ अद्येह—अमुकशर्मा सवधूकोऽहं द्विरागमनाङ्गगृहप्रवेशकर्मण उत्तराङ्गत्वेन भित्तिलिखितकल्याण्यादि— जीवमातृपूजाकर्मणः साङ्गतासिद्ध्यै इमां दक्षिणां ब्राह्मणाय दास्ये ॥ ॐ तत्सत् ॥

दक्षिणां दत्वा,अभिषेकतिलकमन्त्रपाठादिकं कारयित्वा,

अञ्चलग्रन्थि विमोच्य, तत्रैव दधिगुडफेणिकादिकं भुक्त्वा, मुखञ्च प्रक्षाल्य, वधूवरौ यथासुखं विहरेताम् ॥

## ❀ अथ कुम्भविवाह ❀

तत्र हेतुः ॥ बालवैधव्ययोगे तु कुम्भादिप्रतिमां भुवि । कृत्वा लग्नं ततः पश्चात्कन्योद्वाहं समाचरेत् ॥ विवाहात् पूर्वकाले च, चन्द्रताराबलान्विते । विवाहोक्ते शुभे लग्ने, कन्यां कुम्भेन चोद्वहेत् । तत्र पुनर्भूत्वदोषाभाव उक्ता विधानखण्डे—स्वर्णादिपिप्पलानां च, प्रतिमा विष्णुरूपिणी । तया सह विवाहे तु, पुनर्भूत्वं न जायते ॥ इति ॥ (तत्र प्रयोगः) ॥

पूर्वं स्वस्तिवाचन पूर्वकं गणेशं सम्पूज्य कन्यादानकर्तारः पित्रादयः देशकालौ संकीर्त्य ॥

ॐ अद्येह, अमुकगोत्राया अमुकराशेरस्याः कन्याया अमुकस्थानस्थितदुष्टग्रहजनितवैधव्यदोषोपशान्तये वैधव्यहरणार्थं कुम्भविवाहं करिष्ये । तत्पूर्वांगत्वेन मातृपूजाऽभ्युदयिकपुण्याहवाचनानि करिष्ये ॥

इति--सङ्कल्प्य ॥ मातृपूजादिपुण्याहवाचनान्तं कर्म कृत्वा, कलशे नवग्रहानावाह्य सम्पूज्य, तस्मिन्काले सुवर्णप्रतिमायां विष्णुवरुणौ अग्न्युत्तारणपूर्वकं पञ्चाऽमृतेन संस्नाप्य।

'ॐ एतन्ते०' इत्यादि ॐ भूर्भुवः स्वः, सुवर्णप्रतिमायां विष्णुवरुणौ सुप्रतिष्ठितौ भवतम् ॥ पूजा—संकल्पः ॥ ॐ अद्येह अमुकगोत्रा अमुकराशिरमुकदेव्यहं, वैधव्यदोषपरिहारार्थ—सुवर्णप्रतिमायां विष्णुवरुणयोः पूजनञ्च करिष्ये ॥ इति संकल्प्य। ॐ विष्णवे नमः ॥ ॐ वरुणाय नमः ॥ इति नाममन्त्राभ्याम् ॥ ॐ व्विष्णोरराटमसि व्विष्णोः श्नप्त्रेस्थो व्विष्णोः स्यूरसि व्विष्णोर्ध्रुवोसि। व्वैष्णवमसि व्विष्णवे त्वा ॥ इति ॥ पुनः ॐ तत्त्वायामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो व्वरुणेहवोध्युरुश ᳪ समान ऽ आयुः प्रमोषीः ॥ इति वैदिकमन्त्राभ्यां च पाद्यादिनीराजनान्तं विष्णुवरुणौ सम्पूज्य,प्रार्थयेत् ॥ देहि विष्णो !

वरं देव, कन्यां पालय दुःखतः ॥ पतिञ्जी-
वय कन्यायाश्चिरं देव यथासुखम् ॥१॥
अथ वरुणप्रार्थना ॥ वरुणाङ्गस्वरूपस्त्वं,
जीवनानां समाश्रयः । पतिं जीवय कन्या-
याश्चिरं पुत्रसुखं कुरु ॥२॥ इतिसम्प्रार्थ्य ॥
विष्णुवरुणस्वरूपिणे कुम्भाय इमां श्रीरू-
पिणीं वरार्थिनीं कन्यां समर्पयामि ॥
परित्वेत्यादि—विष्णुप्रतिमास्थ १० दश
मन्त्रैरधस्तादुपरिष्टा मन्त्रावृत्त्या दशत-
न्तुकेन सूत्रेण कन्यां कुम्भञ्च परिवेष्ट्य,
ततः कुम्भञ्च निःसार्य्य विसृजेत् सलिला-
शये पञ्चपल्लवसहितेन जलेन । ॐ समुद्र
ज्येष्ठा—इत्यादिमन्त्रैः कन्यामभिषिच्य ॥
दक्षिणासङ्कल्पं कुर्यात् ॥ ॐ अद्येहेत्यादि-
अमुकराशेः कन्यायाः अमुकस्थानस्थितदु-
ष्टग्रहसूचितवैधव्यदोषपरिहारार्थं सौभाग्य-
फलप्राप्तये, कुम्भविवाहकर्मणि सुवर्णप्रति-
मायां विष्णुवरुणयोः पूजनकर्मणः साद्गु-

थ्यार्थमिमां सुपूजितां विष्णुवरुणयोः प्रतिमां सदक्षिणामाचार्याय दास्ये, इमां भूयसीं दक्षिणाञ्च ब्राह्मणेभ्यो विभज्य दास्ये, तथा सिद्धान्नेन यथासंख्याकान् ब्राह्मणाँश्च भोजयिष्ये। ॐ तत्सत् ॥इति॥ संकल्प्य, आचार्य्याय प्रतिमां सदक्षिणां दत्त्वा, ब्राह्मणेभ्यो विभज्य दक्षिणां दत्त्वा, अभिषेकतिलकमन्त्रपाठादिकं कारयित्वा, ब्राह्मणेभ्यो भोजनं च दत्त्वा, यदि कन्याविवाहं कुर्य्यात् तदा शुभम्भवेत् ॥

## ❀ अथ विष्णुप्रतिमाविवाहविधिः ❀

॥ तत्र हेतुः ॥ कन्यायाः जन्मकालीनक्रूरग्रहादिसूचितवैधव्ययोगनाशाय विष्णुप्रतिमाविवाहं पूर्वं विधाय, भूयः पाणिग्रहणं समाचरेत् ॥ तत् श्लोकेन वर्णयामि ॥

विवाहवैधव्यग्रहा यदा स्युस्तदा प्रकृत्या परमेश्वरस्य ॥ संस्कृत्यसंस्कार विधेर्विशेषां न दोषलेशो ग्रहणे त्वमुष्या—इति ॥

तत्र कर्ता मङ्गलं स्नात्वाऽहते वाससी परिधाय, धृतमङ्गलतिलकः शुभासने उपविश्याचम्य सामग्रीं सम्पाद्य,

तत्रादौ कार्यनिर्विघ्नार्थं गणेशादिपञ्चाङ्गदेवताः सम्पूज्यः।

ॐ अद्येत्यादौ—संकीर्त्य—अमुकोऽहममुकराशेरस्याः कन्याया जन्मसमयलग्नादेवैंधव्यसम्भावनासूचकैर्ग्रहैः सूचिताऽरिष्टनिवृत्तये, सौभाग्यप्राप्तये, विष्णुप्रतिमया सह विवाहं करिष्ये ॥ प्रतिमादानञ्च करिष्ये ॥ इति सङ्कल्प्य ॥ आचार्यं सम्पूज्य वरणं कुर्यात् ॥ ततस्ताम्रमयपात्रे विष्णुप्रतिमाया अग्न्युत्तारणपूर्वकम्—'ॐ एतन्त'—इति प्रतिष्ठाप्य ॥ ॐ भूर्भुवः स्वः, विष्णुप्रतिमायां विष्णो ! इहागच्छ सुप्रतिष्ठितो वरदो भव ॥ इति प्रतिष्ठां विधाय ॥ ॐ अद्येत्यादि० देशकालौ स्मृत्वा, अमुकगोत्राया अस्याः कन्यायाः सम्भावितवैधव्यदोषनाशहेतवे, सौभाग्यसमृद्धये, सुवर्णप्रतिमायां श्रीविष्णोः पूजनं करिष्ये ॥ इतिसङ्कल्प्य ॥ विष्णुं ध्यात्वा ॥ ॐ तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः ॥ दिवीव

चक्षुराततम् ॥ ॐ त्रीणि पदा व्विचक्रमे व्विष्णुर्गोपाऽअदाभ्यः ॥ अतो धर्म्माणि धारयन् ॥ ॐ तद्विप्रासो व्विपन्यवो जागृवा ँ सः समिन्धते व्विष्णोर्यत्परमं पदम् ॥ इति वैदिकमन्त्रेण ॥ ॐ विष्णवे नम—इति नाममन्त्रेण च आवाहनादिनीराजनान्तं सम्पूज्य, प्रार्थयेत् ॥ ॐ देहि विष्णो ! वरं देव, कन्यां पालय दुःखतः। पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥ ततः ॥ ॐ परि त्वागिर्वणो गिर ऽइमा भवन्तु व्विश्श्वतः । व्वृद्धायुमनुव्वृद्धयो जुष्टा भवन्तु जुष्टयः ॥ १ ॥ ॐ इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि । ऐन्द्रमसि व्वैश्वदेवमसि ॥ २ ॥ ॐ व्विभूरसि प्रवाहणो व्वह्निरसि हव्यवाहनः । श्वात्रोसि प्रचेतास्तुथोसि व्विश्ववेदाः ॥ ३ ॥ ॐ उशिगसिकविरङ्घारिरसि बम्भारिखस्यूरसि द्रवस्वाञ्छुन्ध्यूरसि मार्ज्जालीयः सम्राडसि

कृशानुः परिषद्योसि पवमानो न भोसि प्रतक्वा विष्टोसि हव्यसूदनऽऋतधामासि स्वर्ज्ज्योतिः ॥४॥ ॐ समुद्रोसि विश्वव्यचा ऽअजोस्येकपादहिरसि बुध्न्यो व्वागस्यैन्द्रमसि सदोस्पृतस्य द्वारौ मामासन्तापमध्वनामध्वपते प्रमातिरस्वस्ति मेस्मिन्पथि देवयाने भूयात् ॥५॥ ॐ मित्रस्य मा चक्षूषेक्षध्वमग्ग्नयः सगराः सगरास्थ सगरेण नाम्ना रौद्रेणानीकेन पातमाग्ग्नयः। पितृत माग्नयो गोपायत मा नमो वोस्तुमा मा हि ँ सिष्ट ॥ ६ ॥ ॐ ज्ज्योतिरसि व्विश्वरूपं व्विश्वेषां देवाना ँ समित्। त्वं ँ सोम तनूकृद्भ्यो द्वेषोत्भ्योन्यकृतेभ्य ऽउरु यन्तासि व्वरूथ ँ स्वाहा जुषाणो ऽअप्तुराज्यस्य व्वेतु स्वाहा ॥७॥ ॐ अग्ग्ने नय सुपथा रायेऽअस्मान्विश्श्वानि देव व्वयुनानि व्विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम-

ऽउक्ति व्विधेम ॥८॥ ॐ अयन्नोऽअग्निर्व-
रिवस्कृणोत्त्वयम्मृधः पुरः एतु प्रभिन्दन् ।
अयं व्वाजाञ्जयतु व्वाजसा तावय ँ शत्रू-
ञ्ज यतु जर्हृषाणः स्वाहा—इति ॥९॥ ॐ
उरुव्विष्णो व्विक्रमस्वोरुक्षयाय नमस्कृधि।
घृतङ्घृतयोने पिब प्रप्र यज्ञपतिं तिर—
स्वाहा ॥१०॥ इति मन्त्रैरधस्तादुपरिष्टाच्च
मन्त्रावृत्या कन्यां प्रतिमाञ्च दशतन्तुसू-
त्रेण परिवेष्टयेत् ॥

ततः किञ्चत् स्थित्वा प्रतिमां निः सार्य दक्षिणां दद्यात् ॥ ततो विष्णुप्रतिमा—दानम् ॥

ॐअद्येत्यादि०अमुकाऽहं देवी स्ववैधव्यादि-
दोषपरिहारार्थं सौभाग्यसमृद्धये इमां सौ-
वर्णीं सुपूजितां विष्णुप्रतिमाममुकगोत्राय
ब्राह्मणाय तुभ्यं सम्प्रददे ॥ इति प्रतिमां
गृहीत्वा ब्राह्मणसन्निधौ । यन्मया प्राचि
जनुषि, घ्नन्त्या पतिसमागमम् । विषोप-
विषशस्त्राद्यैर्हतो वापि विरक्तया ॥ १ ॥

प्राप्नुवन्त्या महाघोरं, यशः सौख्यधनापहम्। वैध० याद्यतिदुःखौघं तन्नाशय सुखाप्तये ॥२॥ बहुसौभाग्यलब्ध्यै च, महाविष्णोरितां तनुम्। सौवर्णीं निर्मितां शक्त्या, तुभ्यं सम्प्रददे द्विज ! ॥३॥ इति द्विजकरे प्रतिमां दत्वा ॥ अनघाहमस्मि—इति निर्वदेत्॥ ब्राह्मणश्च ॥ द्यौस्त्वा ददातु पृथिवी त्वा गृह्णातु ॥ ॐ स्वस्ति ॥ ॐ कोऽदादति पठित्वा 'अनघा भव बाले'—इति निर्वदेत् ॥ ततोऽद्यकृतैतत्प्रतिमादानप्रतिष्ठासिद्धार्थमिदं-सुवर्णमन्यद् द्रव्यं वा ब्राह्मणाय दास्ये ॥ ब्राह्मणश्च—'सौभाग्यवती भव कल्याणि चिरं सुखन्तेऽस्त्विति'—वदेत् ॥

ततोऽभिषेकतिलकपाठादिकं कारयित्वा, पूजितदेवानां विसर्जनं कुर्यात् ॥ इति '।

## ❀ अथाऽर्कविवाहपद्धतिः ❀

तृतीयविवाहात् प्राक् दिनचतुष्टयादिव्यवहिते रविवासरे शनिवासरे वा हस्तर्क्षेऽन्यस्मिन् शुभर्क्षे शुभतिथौ चन्द्रानु-

कूल्यादिसहिते शुभदिने प्राच्यामुदीच्यां वा फलपुष्पाक्षतादियुक्तोऽर्कसविधे गत्वा तदधस्तात्स्थण्डिलं निर्माय, अर्कसमीपमुपविश्याऽर्कविवाहसामग्रीं सम्पाद्य, गणेशादिपञ्चाङ्गदेवताः-सम्पूज्य, प्रधानसङ्कल्पं कुर्यात् ॥ ॐ अद्येहेत्यादि—अमुकोऽहं, मम तृतीयमानुषीपरिणयनदोषपरिहारार्थं शुभफलप्राप्तये तृतीयविवाहाधिकारसिद्ध्यर्थमर्कविवाहं करिष्ये ॥ तत्पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानिकरिष्ये ॥ तदंगत्वेन आचार्य्यस्य पूजनं वरणञ्च करिष्ये ॥ इति सङ्कल्पः ॥

आचार्य्यस्य पूजनं वरणञ्च कृत्वा, ततो वरः अर्कपुरतस्तिष्ठन् सूर्य्यं प्रार्थयेत् ॥

ॐ त्रिलोकव्यापिन् सप्ताश्वच्छायया सहितो रवे । तृतीयोद्वाहजं दोषं, निवारय सुखं कुरु ॥ इति सम्प्रार्थ्यसूर्य्यमेवम्—ततोऽर्कवृक्षे छायासहितमर्कमावाह्य, ॐ आकृष्णे-

नेति-पाद्यादिभिः सम्पूज्य, श्वेतवस्त्रसूत्राभ्यामर्कमावेष्ट्य, "ॐ आपो हिष्ठेत्यादिमन्त्रै"--रभिषिच्य, गुडौदनं ताम्बूलञ्च समर्प्य, प्रदक्षिणीकुर्वन् मंत्रं पठेत् ॥ मम प्रीतिकरा चेयं, मया सृष्टा पुरातनी । अर्कजा ब्रह्मणा सृष्टा, अस्माकं परिरक्षतु ॥ इति जपित्वा। पुनः प्रदक्षिणीकृत्य प्रार्थयेत् ॥ ॐ नमस्ते मंगले देवि ! नमः सवितुरात्मने ! त्राहि मां कृपया देवि, पत्नी त्वं मे इहागता ॥ ॐअर्क त्वं ब्रह्मणा सृष्टः, सर्वप्राणिहिताय च । वृक्षाणामादिभूतस्त्वं, देवानां प्रीतिवर्धन ! ॥ तृतीयोद्वाहजं दोषं, निवारय सुखं कुरु ॥ इति सम्प्रार्थ्य ॥ सङ्कल्पः ॥ अद्य० कश्यपगोत्रकाश्यपवात्स्यनैध्रुवेति त्रिप्रवरान्विताऽऽदित्यप्रपौत्रीं, सवितुः पौत्रीं ममाऽर्कस्य पुत्रीमिमां कन्याम् अमुकगोत्राय अमुकप्रपौत्राय अमुकपौत्राय अमुकपुत्राय अमुकनाम्ने वराय ॥ इति गोत्रोच्चारणं

कृत्वा, ततः सुमुहूर्ते कन्यां निरीक्ष्य, स्वस्तिवाचनं पठित्वा, तत्राऽऽचार्यो विप्रैः सहाशिषो दत्त्वा,ततो आचार्य्यः पूर्ववद्गोत्रोच्चारं कुर्य्यात् ॥ कश्यपगोत्राम् आदित्यस्य प्रपौत्रीम्, सवितुः पौत्रीम्, ममार्कस्य कन्याममुकगोत्राय अमुकशर्मणे वराय तुभ्यमहं सम्प्रददे ॥ इति वरहस्ते जलं दत्वा दानवाक्यं पठेत् ॥ अर्ककन्यामिमां विप्र !, यथाशक्तिविभूषिताम् । गोत्राय शर्मणे तुभ्यं,दत्तां विप्र ! समाश्रयः ॥इति॥ वरस्तु ॥ यज्ञो मे कामः समृद्ध्यताम्,धर्म्मो मे कामः समृद्ध्यताम्, यशो मे कामः समृद्ध्यताम्, इत्यक्षतैस्त्रिवारं सम्पूज्य,सूत्रेण कङ्कणबन्धनं कृत्वा, गायत्र्या अर्कं सूत्रेण दशवारं पञ्चवारं वा, ॐ परि त्वेत्यादि (१०) विष्णुप्रतिमाविवाहस्य मन्त्रैः सूत्रमावेष्ट्य, तत्सूत्रं पञ्चगुणं कृत्वा, अर्कस्कन्धे बद्ध्वा, ॐ बृहसोमेति-रक्षां कृत्वा,

ततो वरः अष्टदिक्षु कलशान् संस्थाप्य, वस्त्रेण त्रिगुणसूत्रेण वा कलशकण्ठे आवेष्ट्य हरिद्रादिकं निक्षिप्य, तेषु कलशेषु, ॐ इदं विष्णुरिति--विष्णुमावाहयेत् ॥ ॐ इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा ᳪ सुरे स्वाहा ॥

इत्यावाह्य ॥ अर्कस्योत्तरे स्थण्डिले पञ्चभूसंस्कारपूर्व्वकमग्निं संस्थाप्य, ॐ एतन्त'-इत्यादिना वरदनामाग्निं प्रतिष्ठाप्य, पाद्यादिभिः सम्पूज्य, आघाराऽऽज्यभागौ हुत्वा, द्रव्यत्यागं कुर्य्यात् ॥

ॐ अद्येह० अर्कविवाह कर्म्मणाऽहं यक्ष्ये ॥ तत्र ॥ प्रजापतिमिन्द्रमग्निं सोमं बृहस्पति-मग्निमग्निवायुं सूर्य्यंप्रजापतिञ्चाज्येनाहं यक्ष्ये ॥ ततः प्रधान होममन्त्रौ ॥ ॐ सङ्गोभिराङ्गिरसो नक्षमाणो भग ऽइमे दर्प्पमणं निनाय । जने मित्रो न दम्पतीऽअनक्ति बृहस्पतये व्वाजया सूरिवाजौ-स्वाहा । इदं बृहस्पतये ॥ ॐ यस्मै त्वा कामकामाय व्वय ᳪ सम्राडयजामहे । तमस्मभ्यं कामं

दत्वाऽथेदं त्वं घृतं पिव-स्वाहा ॥ इदमग्नये ॥ ततो व्यस्तसमस्तव्याहृतिभिर्जुहुयात् ॥ ॐ भूः स्वाहा, इदमग्नये न मम ॥ ॐ भुवः स्वाहा—इदं वायवे न मम ॥ ॐ स्वः स्वाहा, इदं सूर्य्याय न मम ॥ ॐ भूर्भुवः स्वः स्वाहा, इदं प्रजापतये न मम ॥ ततो—भूरादिनवाहुतिहोमं विधाय, पूर्णपात्रदानान्तं कर्म्म समाप्य, अर्कं प्रदक्षिणीकृत्य प्रार्थयेत् ॥ मया कृतमिदं कर्म्म, स्थावरेषु जरायुणा । अर्काऽपत्यानि मे देहि, तत्सर्वं क्षन्तुमर्हसि ॥

इति सम्प्रार्थ्य ॥ शान्तिसूक्तं पठित्वा ॥ अर्कं प्रतिष्ठितं सूर्य्यं विसृज्य, आचार्याय गोयुग्मं दक्षिणां दद्यात् ॥ अन्येभ्योऽपि ब्राह्मणेभ्यो यथाशक्त्या दक्षिणां दत्वा, पूजावस्तूनि गुरवे [आचार्याय] दत्त्वा, दिनचतुष्टयमर्कं कुम्भाँश्च रक्षयेत् ॥ ततः पञ्चमेन्हि प्रभाते पूर्ववत्प्रपूज्य । विसृज्य चैव होमाग्निं, विधिना मानुषी पराम् । उद्वहेदन्यथा नैव, पुत्रपौत्रसमृद्धिमान् ॥

गोयुग्मं दक्षिणां दद्यादाचार्य्याय च भक्तितः । इतरेभ्योऽपि विप्रेभ्यो, दक्षिणा-

ञ्चाऽपि शक्तितः । तत्सर्वं गुरवे दत्त्वा, पुण्याहं वाक्यमाचरेत् ॥ एवमर्कविवाहं कृत्वैव, तृतीय--विवाहं कुर्य्यात् ॥ इति अर्क विवाह समाप्तः ॥



मुद्रक—गोवर्द्धन प्रेस, काजी पाड़ा मथुरा।